॥ श्रीचन्द्रमौलीश्वरो जयति ॥

श्रीमहावागीश्वर्यै नमः

श्रीधर्मदेवता विजयताम्

# श्रीधर्मव्यवस्थावज्रहारः

ॐ

करधार्यः कण्ठधार्यो हृदि धार्यो मनीषिणाम् ।
व्यवस्थावज्रहारोऽयं कालेयापन्निवारणः ॥

अयं च

श्रीविद्वत्कविरत्नवैयाकरणकेसरिधर्मोपन्यासिकेसरीत्यादिबिरुदाङ्कितेन
निखिलान्ध्रदेशीयधार्मिकपण्डितपरिषत्प्रधानमन्त्रिणा च
श्रीमत्पुल्योपनामक—उमामहेश्वरशास्त्रिणा निबध्य
चर्तुदशप्रश्नमालासमाधिरूपो निखिलभारत-
धार्मिकविद्वद्दलविभूषणाय ग्रन्थकर्त्रा
प्रकाशितः श्रीमद्रनगरस्थ ला जर्नल्
मुद्रायन्त्रे मुद्रापितः प्रकटीकृतश्च
विजयतेतमाम्

॥ ईश्वराब्दकार्त्तिकपूर्णिमा ॥

श्रीमहावागीश्वर्यै नमः

श्रीधर्मदेवता विजयताम्

श्रीचन्द्रशेखरदेशिकेन्द्रश्रीचरणेभ्यो नमः

प्रतिष्ठा विश्वविश्वस्य दुःखत्रयनिवर्तकः ।
सुखत्रयानुसंधाता धर्मोऽस्तु शरणं सताम् ॥ १ ॥

कलिभृत्यैः कर्मभूमौ धर्मकल्पतरुर्हठात् ।
दुश्शासनकुठाराल्या छिद्यतेऽवन्तु धार्मिकाः ॥ २ ॥

नत्वा गुरुपदाम्भोजं स्मृत्वा च हृदि भारतीम् ।
आर्यधर्मव्यवस्थाख्यवज्रहारो निबध्यते ॥ ३ ॥

श्रीविद्वत्कविरत्नेन पुल्यकुल्येन धीमता ।
वैयाकरणधर्मोपन्यासिकेसरिणा स्वयम् ॥ ४ ॥

विश्वान्ध्रधार्मिकसुधीपरिषत्कार्यदर्शिना ।
उमामहेश्वरविदा विख्यातेन विदां मुदे ॥ ५ ॥

श्रीकामकोटिपीठेशचन्द्रशेखरपूजने ।
ईश्वरप्रेरितेनैतत्तदुपायनमण्डनम् ॥ ६ ॥

दुर्दृष्टिदुष्टधीजुष्टकल्याकृष्टनिजात्मनाम् ।
दुर्दृष्टिदोषहृतये तत्त्वदृष्टिकृते विदाम् ॥ ७ ॥

आमुखस्वर्णसूत्रालौ तरलेन च संयुतः ।
विद्वत्कण्ठविभूषायै धीसाधनदृढीकृतः ॥ ८ ॥

## श्रीधर्मव्यवस्थावज्रहारस्यामुखसुवर्णसूत्रम्

अयि श्रीधर्मतन्त्रमहानदीष्णाः ! धार्मिकविद्वन्महोदयाः ! विदितवेदितव्याः ! धर्मरक्षणबद्धदीक्षाः ! सप्रश्रयं साञ्जलिबन्धं च श्रीमतां सविध इदमेकमावेद्यतेऽभ्यर्थ्यते च—श्रीपण्डितपुण्डरीकमहाशयाः ! विदितमेव तत्रभवतां भवतां श्रीश्रौतस्मार्तपौराणिकागमिकादिसकलसत्कर्मकेदारधरणौ धरणीरमणीमणिचूडामणौ निखिलपुमर्थनिर्जरतरुवाटिकायाम् अखिलमानवलोकमाननीयतममञ्जुलमहीमहेन्द्रवासभूमौ विहारवेश्मनि वेदशास्त्रमहावागीश्वर्याः अधिष्ठाने श्रीधर्मदेवतायाः आवाससदने सपत्नीपुत्रपरिवारशिवविष्ण्वादिसकलवृन्दारकबृन्दस्य सञ्चारवसतौ अतिपावनगङ्गागोदावर्यादिनिखिलमहानदीनाम् परिणामधरणौ च वाराणस्यादिपुण्यक्षेत्राणाम्, मण्डनगृहे च मङ्गलदेवतायाः, प्रसवसदने च समस्तसुखसम्पदाम्, रक्षणालये च परमपावनपर्वतविपिनादीनाम्, पोषणधामनि च निखिलभाषाकलाकल्पवल्लीनाम्, परिपालनभवने च धार्मिकमहामहविद्वन्महीपालानाम्, नर्तनवसतौ च सत्कीर्तिदेवतायाः, आकरवसतौ च विविधविज्ञानरत्नाङ्कुराणाम्, रत्नाकरदिव्यदुर्गसंरक्षिते श्रीमति भारते वर्षे भाषारमातपोभिरन्वर्थनामधेये निखिलदेवताजीवितभागधेये निखिलभुवनरत्नदीपे कालक्रमप्रवृत्ते कालविशेषेऽत्र कलौ गतवति च पञ्चसहस्राब्दपरिमिते सुकृताधिकप्रवृत्तिमति द्वापरयुगसन्धिकाले समागतवति च स्वराज्यसंस्थापनाय विविधमानवमनीषाविपर्यासके संप्राप्तनिजतपःफलपरिपाककाले कराले कलिसार्वभौमे

निवृत्तशैशवदशे निखिलाधर्मप्रचारणद्वारा निखिलधर्मनिर्मूलन-परायणे स्वयौवराज्याभिषेकाय संमोह्य धर्मविभून् स्वभृत्यद्वारा समाक्रान्तधर्मशासनसभे हा ! हन्त ! हन्त ! श्रीधर्मदेवताममर्म-निकृन्तकानि कति निशितशासनायुधानि तन्मुखतो निर्मितानि निस्सरन्तीति तदाघातेन कथं वा विलपति श्रीधर्मदेवी ; तत्रापि स्वहृदयविदारकरजस्वलाविवाहनिर्बन्धनिशितशासनायुधसञ्चारणेन परितो भारतवर्षं निकृन्त्यमानमर्मा स्वपुत्रान् प्रति वः स्वरक्षणाय समुदासीनानिति च न लेखनी नः प्रभवति निरूपयितुमत्र तदित्यहो दुर्दशा धर्मधरणेरस्माकं चेति ॥ एवं स्थिते त्वधुना कलिभृत्याः पुनः कृतापरितृप्तान्तःकरणाः युगपदखिलमर्मनिकृन्तनद्वारा प्राणो-त्क्रमणपर्याप्तान्येव श्रीधर्मदेव्या हठान्निखिलभारतवर्षनिवासि-निखिलदेवतानिर्वासनक्षमाणि च चण्डालास्पृश्यतानिवारक-निशितशासनचन्द्रहासान् देवमन्दिरचण्डालप्रवेशकनिशितशासन-शस्त्राणि च भारतीयार्यकुलसतीसतीत्वनिर्मूलनचणानि च विविध-शासनायुधजालानि निर्माप्य प्रयोजयितुं शासनायुधनिर्माणशालासु शासनसभासु शासनपत्रलोहशकलानि शस्त्रनिर्माणयन्त्रेषु संभूय सर्वे निक्षिपन्ति न्यक्षिपंश्च कानिचन निक्षेप्स्यन्ति चात्र इत्यपि सुविदितमेव लोकज्ञानां श्रीमताम् ॥

मान्यमहोदयाः ! बतेदानीमीदृशं विजृम्भमाणं बहुतरं कलि-भृत्यसंरम्भं वीक्ष्य भीतभीतायाः प्राणपरिरक्षणायात्मनो विशंकटं विलपन्त्याः श्रीधर्मदेव्यास्समापन्नमतिसंकटमिदं प्राणपणसंगरेणा-पनोदयितुं यदि न संनद्धा भवेम धार्मिकाः सर्वे संभूय तर्हि

चिराध्युषितायाः कर्मभूमेरस्याः प्रस्थास्यति सा ध्रुवं परलोकं स्वपरिवारेण सह माता श्रीधर्मदेवतेति तदाक्रन्दितविलपित-क्रियासमभिहारसंश्रवणकलिभृत्यसंरम्भविजृम्भणादिलोकवृत्तावलो-कनादिसंरब्धान्तःकरणा अधर्मनिर्मूलनद्वारा श्रीधर्वदेवतारक्षणाय बद्धपरिकरा अन्तर्यामिदृढसंचोदिताः धर्मरक्षापराः सन्तः देशीय-धार्मिकमहोदयैः डिसंबर् मासपञ्चविंशाहःप्रभृतिदिवसेषु समावेशयितुं मद्रनगरे निश्चितायाम् अखिलभारतवर्षीयधार्मिकमहाविद्वत्परिषदि समालोच्य निर्णेतुम् आधुनिककालेयव्युद्यमानविषयानधिकृत्य चतुर्दशसंख्याकान् उपनिबध्य धर्मप्रश्नावलीमेकामखि-लान्ध्रधार्मिकपाण्डितपरिषत्कार्यदर्शिपदभारमुपारूढवता भवता शास्त्रीयमार्गेण प्रतिप्रश्नं प्रत्येकशः शास्त्रीया व्यवस्था यथा-मति विधाय समाधिपत्रमचिरेण कालेन समर्पणीयामित्यन्व-जिज्ञपन् । तदनुज्ञानुसारेण तदनुग्रहसंचोदितोऽहं महता परिश्रमेण धर्मशास्त्राकरादुद्धृत्यैतानि व्यवस्थावज्राणि मध्यमणिना सह त्रयोदशामुखसुवर्णसूत्रे धीशिल्पपरिकरेण दृढं स्थगयित्वा निर्मायानर्घमेनं वज्रहारं मुद्रापितं च निखिलविद्वत्कण्ठ-विभूषणाय सितपत्रदन्तपेटिकायां निक्षिप्य समर्प्य च धन्यम्मन्यो यथायमखिलविद्वत्कण्ठधारणमापद्येत तथानुग्राह्य इत्यभ्यर्थितवान् । अतः श्रीमतोऽहमभ्यर्थये सानुनयं धार्मिक-विद्वद्वतंसान् वः परिशील्य चेममवयवशः संधार्य च सादरं स्वग्रीवासु दुर्दृष्टिदोषतमोऽपहतं लोकतत्त्वं दृष्टिप्रदानेन स्वाशया-विष्कारेण च प्रकाशयन्तु ; भूयो भूयोऽनुगृह्णन्तु च मां परि-

श्रमसाफल्यदानेन; रक्षन्तु च श्रीधर्मदेवतां कालेयविप्लवोपहन्यमानां परितो भारतवर्षम् आस्थापयन्तु च निजवाङ्मुखसुधाधाराभिवर्षणेन निजधर्मानन्तरितप्रायान् जनेषु निर्मूलयन्तु च निखिलधर्माधर्मविपर्ययव्यामोहं कालेयकृतमार्येष्विति ॥

---

## श्रीमेरुभूतं तत्र प्रथमं धर्मपरिवर्तनाधिकार-व्यवस्थावज्रम्

१. ऋषीणां तदर्वाचीनानां वा देशकालाद्यनुरोधेन धर्माधर्मविपरिवर्तनेऽधिकारः शास्त्रसिद्धो भवति न वा ? एवं धर्माधर्मनिर्णयस्य कर्तव्यतायां मीमांसान्यायदृष्टिः प्रक्षेपणीया अथवाधुनिकचारित्रकदृष्टिः इति—प्रश्नसमालोचने न केषामप्यधिकारः शास्त्रसिद्धो भवतीत्येव व्यवस्था। तथाहि—यद्यप्ययं विचारो धर्माधर्मस्वरूपपरिज्ञानेन भागी। तथापि कालेयकृततत्परिवर्तनाधिकारासिद्धान्तमूलकत्वेन संप्राप्त इति सोऽत्रारभ्यते—जैमिनिहारीतादिभिः 'चोदनालक्षणोऽर्थो धर्मः' 'श्रुतिप्रमाणको धर्मः' इत्यादिभिर्धर्मलक्षणं परिष्कृतम्। तेषामेकवाक्यतया श्रुतिचोदनाविषयत्वे सति बलवदनिष्टाननुबन्धित्वं तत्त्वमिति लक्षणं सिध्यति। एवं तद्विपरीतत्वमेवाधर्मस्य लक्षणं निरूपितम्। तद्वैपरीत्यं च श्रुतिप्रतिषेधविषयत्वे सति बलवदनिष्टानुबन्धित्वरूपमिति व्यक्तमेव। एवं लक्षितौ च तौ अतीन्द्रियौ क्रियाविशेषादिरूपावित्यतिरोहितं प्रेक्षावताम्। तथा चा-

श्रुतिमूलकविधिप्रतिषेधविषयाणां धर्मत्वाधर्मत्वयोरभावः, स्मृति-सदाचारादीनां च "श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम्। तस्मात् प्रमाणमुभयं प्रमाणैः प्रमितं भुवि ॥" "श्रुतिर्हि बलीयस्यानुमानिकादाचारात्" इत्यादिस्मरणेन श्रुतिमूलकत्वेन तद्विधिप्रतिषेधविषयाणामपि धर्माधर्मत्वनिर्णयेन तदितरविनिर्मितानां तत्त्वासिद्धेः। यदुद्देशेन येषां श्रुत्या विधानं प्रतिषेधो वा, तत्रैव तेषां तत्त्वसिद्ध्या तदितराश्रितत्वे तत्त्वसिद्धौ मानाभावाच्च। न च धर्मज्ञसमयः प्रमाणमित्यापस्तम्बेन धर्मज्ञानामविशेषात् सर्वेषामप्याचारस्य सिद्धान्तस्य वा प्रामाण्यस्य निर्णीतत्वेन धर्मज्ञत्वस्य च प्राचीनार्वाचीनसाधारण्येनाधुनिकाचारसिद्धान्तानामपि प्रामाण्येन परिग्रहः कुतो नेति वाच्यम्—तत्सूत्रव्याख्यानावसरे हरदत्तेन "न ब्रूमः समयमात्रं प्रमाणमिति, किं तर्हि धर्मज्ञा ये मन्वादयः तेषां समयः प्रमाणं धर्माधर्मयोः" इत्यादिना मन्वादीनां स्मृति कर्तॄणामेव धर्मज्ञत्वं तदतिरिक्तानामर्वाचीनानां तु तत्समयज्ञत्वमात्रमेव न धर्मज्ञत्वमिति निरूप्य "सुगतो यदि धर्मज्ञः कपिलो नेति का प्रमा। तावुभौ यदि धर्मज्ञौ मतभेदः कथं तयोः॥" इत्यादिना मन्वादीनामेवातीन्द्रियधर्मज्ञत्वं कथमित्याशंक्य विशेषबोधकं वेदाश्चेति सूत्रमित्याद्युक्त्वा तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणं धर्मज्ञानां तु वेदाः प्रमाणमिति निरणायि। तथा च मन्वादीनां धर्मबोधकवेदज्ञत्वेन धर्मज्ञत्वव्यवहारः न तु साक्षाद्धर्मज्ञत्वमिति निर्णायकेन सूत्रेणानेन स्मृतिप्रामाण्यस्यैव लाभात् अर्वाचीनानां यावद्वेदज्ञत्वस्याभावेन यत्किंचिद्वेदज्ञत्वस्य धर्माधर्मनिर्णयाप्रयोजकतया तपोमहि-

मैहेतुकनिखिलवेदद्रष्टृत्वरूपऋषित्वस्याभावेन न स्वातन्त्र्यं ऋषीणामपि धर्माधर्मविपरिवर्तन इत्यर्थस्यैव लाभात् । वेदोक्तधर्माधर्मप्रवर्तननिवर्तनयोरेव स्वातन्त्र्यमृषीणाम् न तु विपरिवर्तनादावित्यंशस्यैव लाभ इति तत्त्वम् । न च कलिवर्ज्यप्रकरणे युगान्तरेषु धर्माणां कलावधर्मत्वव्यवस्थापनेन तथा युगान्तरेष्वधर्माणां कृष्यादीनां ब्राह्मणादिषु धर्मत्वेन कलौ व्यवस्थापनेन च देशकालाद्यनुरोधेन धर्माधर्मविपरिवर्तनस्य ऋषिकृतस्य दृष्टत्वात् तथैव तदर्वाचीनानामस्मदादीनामपि देशकालाद्यनुरोधेन तद्विपरिवर्तने कुतो नाधिकार इति वाच्यम्—"कुटुम्बभरणायालमन्नं यस्य त्रिवत्सरम् । काम्येन सोमयागेन यजेतासौ न चेतरः ॥" इत्यादिवचनेषु न चेतरः इत्यादिवाक्यैरनधिकारिषु तादृशद्रव्यहीनेषु धर्मस्यापि यागादेर्निवर्तनवत् कलिवर्ज्यप्रकरणोक्तानामश्वालम्भादीनां श्रुतिचोदितत्वेन धर्मत्वेऽपि कलियुगीयद्विजातीनां यथावदनुष्ठानासामर्थ्यविज्ञानेनायथावदनुष्ठितानां तेषां "नास्ति यज्ञसमो रिपुः" "हन्ति यज्ञोऽल्पदक्षिणः" इत्यादिवाक्यसिद्धशत्रुत्वप्राप्त्या विपरीतफलाधायकत्वेन, नियोगादिविधीनामसिधाराव्रततुल्यत्वेन तत्र यत्किंचिद्रागपूर्वकप्रवृत्तावपि विपरीतफलावाप्त्याम्नानेन च कालेयमानवेषु कामाद्यतिशयविज्ञानेन मनोनिग्रहादिहैन्यविज्ञानेन च तद्धर्मानधिकारित्वबोधनद्वारा ततो निवर्तनमात्रस्यैव "निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः" इत्यादिवचनैर्बोधितत्वेन श्मशानवेदाध्ययनवत्तेषां धर्माणामधर्मत्वेन परिणामस्यैव त्रिकालवेदिभिराम्नानेन तावन्मात्रस्यैव लाभात्, निवर्तनमात्रस्य परिवर्तनत्वायोगात् । एवं

कलियुगीयब्राह्मणानां शिलोञ्छादिमुख्यवृत्तिभिः जीविकानिर्वर्तनस्य दुर्घटत्वविज्ञानेन युगान्तरेष्वापद्धर्मभूतानामेव कृष्यादीनामत्र युगे याजनाध्यापनादिमुख्यवृत्त्यन्यतमाश्रयणेनानिर्वर्त्यजीविकानां ब्राह्मणानां तत्पापापनोदकखलयज्ञाद्यनुष्ठानसहकृतानां स्वधर्मवैश्वदेवादिसहकृतानां चैव तेषाम् अभ्यनुज्ञानेन गौणत्वस्य वापद्धर्मत्वस्य वा लाभाच्च. प्रवर्तनरूपस्य तस्यापि परिवर्तनत्वायोगाच्च । तद्धि परिवर्तनमाम्नायतेऽमरसिंहादिभिः— "परिदानं परीवर्तो नैमेयनिमयावपि" (प्रतिदानमित्यपि पाठान्तरम्) इत्यादिभिरेकवस्तुस्वीकारेण अन्यवस्तुप्रत्यर्पणरूपम् । तिलग्रहणेन माषप्रत्यर्पणं यथा तथा प्रायेण सममूल्यकयोरेव वस्तुनोः स्वस्वाभीष्टफलाप्तये परस्परकामनाप्रयोज्यं तत् दृश्यते लोके । तथा च विभिन्नस्वामिकयोर्द्वयोर्वस्तुनोः युगपदितरेतरस्वामित्वप्रापणरूपं परिवर्तनं तत्र पर्यवस्यति । एवं विभिन्नाश्रययोः क्रिययोरपि युगपदितरेतरकर्तृत्वप्रापणरूपं परिवर्तनं क्रियास्थले भवति । यथा केशाकेशीत्यादौ केशग्रहणयोः । तथा च भिन्नभिन्नाश्रययोः द्वयोर्वस्तुनोः क्रिययोर्वा समफलकयोर्विषमफलकयोर्वा समानकालिकभिन्नाश्रयत्वप्रापणमितरेतरकर्तृकं परिवर्तनमिति फलति । नैवमत्र कुत्रापि ऋषिकर्तृकं परिवर्तनं घटत इति वक्तुं युज्यते । (कालादिकृतप्रकृत्यन्यथाभावरूपविपरिणाम एवात्र विपरिवर्तनपदेन गृह्यत इति न मूढेनापि वक्तुं शक्यते) न वा विपरीतप्रापणरूपं विपर्ययणमेवात्र गृहीतमिति वक्तुं साम्प्रतम् । धर्मस्याधर्मत्वेनाधर्मस्य धर्मत्वेन वा सुखफलकस्य दुःख-

फलकत्वेन दुःखफलकस्य सुखफलकत्वेन वा कुत्रापि ऋषिभिरबोधितत्वात् ॥

मरणान्तिकप्रायश्चित्तार्हब्रह्महत्यायां संकुचितसेतुदर्शनप्रायश्चित्तस्य पराशरादिभिर्विधानेन संकोचनविकोचनादीनां तथान्यत्रापि वेदैकदेशाध्ययनादिविधानेषु ऋषिकर्तृकाणां दृष्टत्वेन तादृशमेव परिवर्तनं विवक्षितमित्यपि न वक्तुं युज्यते। प्रायश्चित्तविधानेषु प्रायश्चित्तीयदेशकालवयःशक्त्यादितारतम्यानुरोधेनैव तद्विधानस्य प्रायश्चित्तविधातृसाधारण्येनैव अभ्यनुज्ञातत्वात् तस्य च सर्वयुगसाधारण्याच्च रथकारन्यायेन प्रायश्चित्तमात्रविषयकत्वाच्च परावरज्ञैः पराशरादिभिरेतद्युगीयव्यक्तिशक्त्यादिविज्ञानपुरस्सरं तथा विहितेष्वङ्गीकारेऽपि तदतिरिक्तेषु तत्प्रवर्तने मानाभावात्। वेदैकदेशाध्ययनादिविधानेषु च तात्त्विकान्यथाभावरूपस्य कालकृतस्येव रूपान्तरप्राप्तिरूपस्य विकारस्य प्रतिमादिषु निर्मातृकृतस्यापि लोके दर्शनेन तत्र तत्त्वत्यागाभावेन च संकोचनविकोचनादीनां विकाररूपत्वेन विपरिवर्तनत्वायोगाच्च। अतात्त्विकान्यथाभावरूपस्य विपरिवर्तस्यानन्यकृतत्वेनात्र कथमप्यसंभवाच्च। एवं धर्माधर्मनिर्णयौपयिकत्वेन प्रवृत्तस्य मीमांसाशास्त्रस्य वैयर्थ्यापत्त्या नव्यचारित्रकदृष्टेः रागादिदोषदुष्टतया च मीमांसान्यायानुसारेणैव धर्माधर्मनिर्णयस्य कर्तव्यताया एव शास्त्रसिद्धत्वेन शास्त्रव्यवस्थापितप्रमाणानुरुद्धाया एव युक्तत्वमित्यन्यत्र विस्तरः ॥

वस्तुतस्तु श्रुतिं पश्यन्तीत्यादिनियमानुरोधेन संकुचितादिधर्माणामपि आपदादिधर्माणामिव श्रुतिचोदितत्वेनैव स्मर्तॄणां स्मरणमिति कल्पनस्यैव युक्तत्वमुत्पश्यन्ति सुधियः। एवं स्थिते वस्तुतत्त्वे सार्वदिकत्वेन विरुद्धफलयोर्धर्माधर्मयोरेव विरुद्धं परिवर्तनं नाम धर्ममधर्ममधर्मं धर्मं च प्रवर्तयितुमुद्यतानामधुनातनानां धर्माधर्मविपरिवर्तनं शास्त्रीयत्वेन समर्थयितुमुद्युञ्जानानां धर्मज्ञंमन्यानां पण्डिताभासानां धर्मपरिवर्तनाधिकारप्रत्याशा वन्ध्यावधूपुत्रप्रसवाशातुल्येत्येव सिध्यतीत्यलम् ॥

इति प्रथमं धर्मपरिवर्तनाधिकारव्यवस्थावज्रम्

---

## द्वितीयं राजाधिकारदुश्शासनव्यवस्थावज्रम्

२. तत्तद्देशीयप्रभूणां तत्तच्छासनसमितिसभ्यानां वा न्यायान्यायविनिर्णये तत्तच्छासननिर्माणप्रवर्तनादौ च स्वदेशीयतत्तन्मतस्थतत्तद्धर्मशास्त्रतत्तत्सदाचारसंप्रदायानुरोधं विना तद्विरुद्धेन कुत्राप्यधिकारः शास्त्रदृष्टोऽस्ति वा ? तथा प्रवर्तिते च राज्ञा बलाच्छास्त्राचारविरुद्धशासननिर्माणादौ तत्प्रवर्तनादौ कृते च स्वदेशेषु तत्तद्देशीयतत्तन्मतस्थतत्तत्प्रजानां तत्तच्छासनानुरोधे सति तत्तच्छास्त्रोक्तजातिभ्रंशादिदोषा आपद्यरेन् वा न वेति विचारे, न कुत्रापि राज्ञां सभ्यानां वा शास्त्रेणाधिकारो निरूप्यत इत्येव प्रथमेंऽशे व्यवस्था। तथा हि—
"धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमतिस्थितिः। समाहितमतिः पश्ये-

द्व्यवहारानानुक्रमात् ॥ धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन पार्थिवः । समीक्षमाणो निपुणं व्यवहारगतिं नयेत् ॥" इति नारदेन, "व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैस्सह । धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥" इति याज्ञवल्क्येन "यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः । अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥" इति नारदेन "शास्त्राणि वर्णधर्मांश्च प्रकृतीनां च भूपतिः । व्यवहारस्वरूपं च ज्ञात्वा कार्यं समाचरेत् ॥" इति हारीतेन "जातिजानपदान् धर्मान् श्रेणिधर्मांश्च शाश्वतान् । समीक्ष्य कुलधर्मांश्च स्वे वर्गे प्रतिपादयेत् ॥ कुलानि प्रकृतीश्चैव श्रेणीर्जानपदानपि । स्वधर्माच्चलितान् राजा विनीय स्थापयेत् पथि ॥ निजधर्माविरोधेन यस्तु सामयिको भवेत् । सोऽपि यत्नेन संरक्ष्यो धर्मो राज्ञा कृतश्च यः ॥" इत्यादिभिर्मनुयाज्ञवल्क्याभ्यां च धर्मशास्त्रानुरुद्धतदविरुद्धार्थशास्त्रानुरुद्धतदुभयाविरुद्धदेशजातिकुलश्रेणिधर्मादीनां परिपाल्यत्वाविचाल्यत्वयोरेवानुशासनात् धर्मशास्त्रार्थशास्त्रपरिशीलनतदविरुद्धलोकाचारव्यवहारपरिशीलनपूर्वकमेव सति विवादे न्यायान्यायौ तदविरोधेन राज्ञा निर्णेयाविति विधानाच्च न स्वातन्त्र्यं स्वैरविधया न्यायान्यायविनिर्णये राज्ञः सभ्यानां वा निरुच्यते शास्त्रेण । तथा—"यस्मिन् देशे य आचारो व्यवहारः कुलस्थितिः । तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥" इति परदेशस्वामित्वप्राप्तिदशायां तत्तद्देशजातिकुलाचारव्यवहारादीनां परिरक्षणमेव विधत्ते याज्ञवल्क्यः । अत एव च—नश्यतां सर्वधर्माणां राजा धर्मप्रवर्तकः । कार्यं सोऽन्वीक्ष्य शक्तिं च देशकालौ च तत्त्वतः ॥ कुरुते

धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ।" इत्यादिना मन्वादिभिः देशकालशक्त्यनुरोधेनापि धर्मसिद्ध्यनुरोधिकार्यप्रवर्तकत्वमेवाम्नायते ; न तु विपरीतप्रवर्तकत्वं राज्ञः । तथा च रागादिवशात् अन्यायप्रवर्तकत्वे राज्ञः औदासीन्येनावर्तनं ततो निवर्तनं च सभ्यानां विदधदुदासीनानां तेषां राजावैशिष्ट्येन नरकपातं विधत्ते कात्यायनः, "अपन्यायप्रवृत्तं च नोपेक्षेरन् सभासदः । उपेक्षमाणाः सनृपा नरकं यान्त्यधोमुखाः ॥" इति । एवं रागादिवशात् शास्त्रविरुद्धांशवादिनां दण्ड्यत्वं सभानिस्सारणादिकं च विदधति कात्यायनादयः "स्नेहादज्ञानतो वापि मोहाद्वा लोभतोऽपि वा । यत्र सभ्योऽन्यथावादी सभ्यो दण्ड्यः स्मृतो हि सः ॥ रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः । सभ्याः पृथक्पृथग्दण्ड्या विवादाद्द्विगुणं दमम् ॥ अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः । विश्वस्तवञ्चकाश्चैव निर्वास्यास्सर्वं एव ते ।" इत्यादिभिः । "देशाचारानभिज्ञा ये नास्तिकाः शास्त्रवर्जिताः । उन्मत्तक्रुद्धलुब्धार्ता न प्रष्टव्या विनिर्णये ॥" इत्यादिभिः शास्त्राचारज्ञानविहीनानां नास्तिकानां चासभ्यत्वमेव स्फुटीकृत्य "श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः । राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥" इति याज्ञवल्क्येन, "स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः । धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥ लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।" इत्यादिभिः कात्यायनेन च सभ्यलक्षणं निरुक्तम् । तथा च— "राजा कार्याणि संपश्येत् प्राड्विवाकोऽथ वा द्विजाः । न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः ॥" इति बृहस्पतिना न्याय-

निर्णयसाधनधर्मशास्त्रार्थशास्त्रादिग्रन्थानुरोधेन तदविरोधिसभ्यतर्कोपोद्बलितेन न्यायान्यायविनिर्णयस्य कर्तव्यता राज्ञः सभ्यानां च तथैवानुवादिता च विधीयते । न तु केषामपि स्वाशयानुरोधेन न्यायान्यायविनिर्णायकत्वमभ्यनुज्ञायते शास्त्रेणेति सिध्यति । एवम्—
"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥" इत्यादिदशनिर्णय्यादिधृतबोधायनादिवचनानुरोधेन वेदशास्त्राविरोधितर्कस्यापि धर्मनिर्णयानुसन्धायकत्वाभिधानेन धर्मशास्त्रविहिता न्यायाः तत्प्रतिषिद्धा अन्यायाः, तथा धर्मशास्त्राविरुद्धसत्तर्कोपहितार्थशास्त्रविहितास्तदुभयाविरुद्धदेशजातिकुलाद्याचाराश्च न्यायाः तत्प्रतिषिद्धाश्चान्याया इति लभ्यते । यत्तु "राजा कालस्य कारणम्" "यथा राजा तथा प्रजाः" इत्यादिशुक्रनीत्यादिवचनानुरोधेन जगच्चक्रप्रवर्तककालचक्रस्यापि राज्ञः प्रवर्तकत्वाभिधानेन तदाज्ञानुपालनस्यापि प्रजानां विहिततया राजाज्ञागोचराणां सर्वेषामपि धर्मत्वेन तत्प्रतिषिद्धानां चाधर्मत्वेन शास्त्रविरुद्धेष्वपि देशकालौचित्याद्यनुरोधेन राज्ञा शासनद्वारा प्रवर्तितेषु प्रवृत्तानां प्रतिषिद्धेभ्यो निवृत्तानां च प्रजानां शास्त्रोक्तदोषानाक्रान्तिरिति द्वितीयेंऽशे कैश्चिदुच्यते, तदविचारितरमणीयम्—यतो याज्ञवल्क्यव्यवहारकाण्डे स्त्रीपुंसयोगप्रकरणे—"दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु । सभ्यास्सजयिनो दण्ड्या विवदाद्द्विगुणं दमम् ॥" इति वचने सभ्यानां रागलोभादिवशादन्यथाव्यवहारदर्शने राजा पुनर्विचार्य निश्चितदोषा जेतृसहिताः सभ्या दण्डनीया इति विधायके विज्ञानयोगीश्वरेण "यदा तु राजानुमत्या व्यवहारस्य दुर्दृष्टत्वं तदा

सर्वे एव राजसहिताः सभ्यादयो दण्डनीयाः "पादो गच्छति कर्तारं पादस्साक्षिणमृच्छति । पादः सभासदस्सर्वान् पादो राजानमृच्छति ॥" इति वचनात् । एतच्च प्रत्येकं राजादीनां दोषप्रतिपादनपरम् । न पुनरेकस्यैव पापापूर्वस्य विभागाय । यथोक्तम्—"कर्तृसमवायिफलजननस्वभावत्वादपूर्वस्य" इति वाक्येन राजानुमत्यैव शास्त्रविरुद्धनिर्णये राजसहितानां सभ्यादीनां दण्ड्यत्वमुक्त्वा दोषभाक्त्वमपि पृथक्प्रतिपाद्य "पादो-गच्छति" इत्यादिवचनस्य कर्तृपापविभाजकत्वाभावं प्रतिपाद्य पापकर्तुस्साकल्येन तत्पापफलभाक्त्वस्य व्यवस्थापनात् । तथा च शास्त्रविरुद्धनिर्णये रागादिवशेन दुर्दृष्ट्यान्यथाव्यवहारनिर्णये वा तत्प्रयुक्तपापान्तरोत्पत्ती राजादीनां प्रतिपादितेति तत्त्वम् । पूर्वोक्तरागाल्लोभादित्यादिश्लोकेनैव स्मृतिविरुद्धादिनिर्णयकारिणां नरकपातादिसिद्धौ वचनस्यास्य पौनरुक्त्यमाशंक्याप्राप्तजेतृदण्ड-विधिपरत्वेन तस्य परिहृतत्वात् दुर्दृष्ट्यान्यथानिर्णय इव शास्त्रादि-विरुद्धनिर्णयेऽपि तज्जन्यपापान्तरभाक्त्वं निर्णेतॄणामित्यस्य सिद्धेश्च । एवं च शास्त्रादिविरुद्धशासननिर्माणप्रवर्तनादौ राजकृते तदनु-वर्तिनीनां प्रजानां शास्त्रोक्तदोषाक्रान्तिरव्याहतेति फलति । राजा कालस्य कारणमित्यादेस्तु धर्माधर्मप्रवर्तननिवर्तनार्थं सर्वदिगीशांश-सृष्टस्य तच्छक्तिमतो राज्ञो धर्मप्रवर्तनाधर्मनिवर्तनयोः शास्त्रेण स्वस्य विहितयोर्यथावदनुष्ठाने लोकरक्षाफलकस्वसृष्टेः पारमेश्वर्याः सफलत्वमयथावदनुष्ठाने विपरीतानुष्ठाने च विपरीतफलत्वं च । कालगतप्रवर्तकत्वशक्त्यपेक्षयापि राजगतप्रवर्तकत्वशक्तेः प्राबल्य-

मित्येतत्तात्पर्यकत्वमेवानयोर्वचनयोरवगन्तव्यम् । साकल्येन धर्मप्रवृत्तिमति कृतयुगेऽप्यधर्मप्रवर्तनशक्तेः वेनादिषु दृष्टतया पादमात्रेण धर्मप्रवृत्तिमति कलावप्यत्र कलिनिग्रहपूर्वकं साकल्येन धर्मप्रवर्तनशक्तेः परीक्षिदादिषु दृष्टतया च कालस्यापि कारणेन राज्ञा स्वविहिताचरणेऽनुक्षणमप्रमत्तेन भवितव्यम्, अन्यथा जगद्भ्रंशकत्वस्वभ्रंशकत्वयोरापात इति जागरबोधकानीदृशानि वचनानीति स्पष्टमेव विज्ञानाम् । एतेनानुभूतराजदण्डानां कृतापराधानां स्वापराधजन्यनरकनिवृत्तिवद्राजाज्ञानुपालनेनात्रापि शास्त्रोक्तप्रत्यवायनिवृत्तिरित्यादि पाण्डित्यविलसितमायुष्मतामाधुनिकानां प्रत्युक्तं वेदितव्यम् । तत्तदपराधविशेषेषु तत्तद्दण्डविशेषाणां विधेयत्वेन राज्ञो विशिष्य विधानात् अदण्डने न्यूनाधिकदण्डने वा राज्ञो नरकपातादिविधानाच्च, तथानुभूतराजदण्डानां तत्तत्प्रत्यवायनिवृत्तेरपि शास्त्रेणैव बोधितत्वाच्च दण्डस्य प्रायश्चित्तरूपधर्मत्वेनाम्नानाच्च तत्र तथात्वेऽपि शास्त्रनिषिद्धप्रवर्तकराजशासनानुवर्तिनां निषिद्धकार्यप्रवृत्तानां तत्तत्प्रत्यवायनिवृत्तौ मानाभावात्; पूर्वोक्तदिशा प्रत्युत प्रत्यवायप्राप्तेरेव सिद्धत्वाच्चेत्यलमविवेकेन । तथा चेश्वरशासनं न कदापि तद्विरुद्धं राजशासनं बाधितुं प्रभवतीत्येव व्यवस्था । न चासह्यदण्डादिविधानपूर्वकदुर्दृष्टिसहकृतदुःशासनप्रवर्तनस्य राजकृतस्य प्रजानामापद्रूपत्वेन तदनुवर्तनस्य नान्तरीयकतया तस्य चापद्धर्मत्वेन तदनुष्ठाने न दोष इति वाच्यम्—आपद्धर्माणां प्रायेण प्रायश्चित्तसहकृतत्वात् यत्र यथा प्रायश्चित्तं स्मर्यते तत्र तथा तदनुष्ठानेन तद्दुरितनिवृत्त्या तदनुष्ठायिनां

तद्दोषाभाजनत्वेऽपि प्रायश्चित्ताभाववत्त्वेनाम्नातेषु दुष्टेषु कर्मसु प्रवृत्तानां तद्दोषभाक्त्वस्याप्रतीकार्यत्वात् । तथा च तादृशदुश्शासनानुवर्तनेन तत्र राजदण्डाद्यैहिकदुःखनिवृत्तिरेव न त्वामुष्मिकदुःखनिवृत्तिः न वा स्वधर्मानुष्ठानाधिकारनिवर्तकदोषनिवृत्तिरिति फलितमित्यलं पल्लवितेन ॥

## इति द्वितीयं राजाधिकारदुश्शासनव्यवस्थावज्रम्

---

## तृतीयं पुष्पिणीपरिणयव्यवस्थावज्रम्

३. श्रीश्रौतस्मार्तपौराणिकागमिकादियावदार्यविशेषधर्माधिकृतेषु तदन्यतमयत्किंचिदार्यविशेषधर्माधिकृतेषु वा शुद्धेषु संकीर्णेषु वा वर्णेषु उत्पन्नानां जननादिसप्तमाब्दान्तगौणकाले वा तथैकादशाब्दादिपुष्पदर्शनपूर्वगौणकाले वा गर्भाष्टमादिदशमाब्दान्तमुख्यकाले वाप्यविवाहितानामार्यजातीयकन्यानां दृष्टरजस्कानामदुष्टतया विवाहो विधीयते कासामपि धर्मशास्त्रेण ? अथवा दुष्टतयैव कथंचिदभ्यनुज्ञायते रजोदर्शनानन्तरमवधिकालविशेषनिर्देशपूर्वकम् ? तथाभ्यनुज्ञातोऽपि विवाहस्सार्ववर्णिकतयाभ्यनुज्ञात उत यत्किंचिद्वर्णविशेषपुरस्कारेणेति प्रश्नविचारे नादुष्टतया कासामप्यार्यजातीयकन्यानां पुष्पदर्शनानन्तरं विवाहं विधत्ते शास्त्रमित्येव व्यवस्था । तथाहि—मनुस्मृतौ

नवमाध्याये—"प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थं च मानवाः । तस्मात् साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥ क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान् । क्षेत्रबीजसमायोगात् संभवस्सर्वदेहिनाम् ॥ यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते । तादृग्रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः ॥" इत्यादिवचनैः क्षेत्रबीजादिदृष्टान्तेन स्त्रीपुंसयोः संतानसृष्टिप्रवर्तकत्वेनैव विधात्रा सृष्टत्वाम्नानात् "ऋतौ भार्यामुपेयात्" "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥" "ऋतुस्नाता तु या नारी भर्तारं नोपसर्पति । सा मृता नरकं याति वैधव्यं च पुनः पुनः ॥" इत्यादिवचनैर्याज्ञवल्क्यादिभिर्वृष्टिस्थानीयऋतुदर्शनाव्यवहितोत्तरकालमेव बीजावापस्थानीयपत्न्युपगमनस्य कर्षकस्थानीयभर्तृकर्तृकस्य विधानेन तदकरणे पत्युरुत्पत्स्यमानापत्योत्पत्तिप्रतिबन्धकतया भ्रूणहत्यादोषभाक्त्वस्याम्नानात्, बीजावापकभर्त्रनुपसर्पणे जायाया नरकपातवैधव्यावाप्त्यादिदोषभाक्त्वस्य चाम्नानात् ऋतुदर्शनकालस्यैव बीजावापकालत्वेनाम्नानाच्च तदुपगमनोसर्पणादीनां भर्तृभार्यात्वसिद्ध्युत्तरकालिकत्वस्यैव भार्याभर्तृप्रभृतिपदैरन्यैश्च वचनैरुद्बोधितत्वेन, तत्सिद्धेश्च "पतित्वं सप्तमे पदे" "वाग्दानं च प्रदानं च वरणं पाणिपीडनम् । सप्तपदीति पञ्चाङ्गो मुनिभिः परिकीर्तितः" ॥ इत्यादिधर्मप्रवृत्त्यादिधृतवचनकदम्बेन वाग्दानादिपूर्वाङ्गप्रवेशहोमाद्युत्तराङ्गविशिष्टप्रधानहोमादिसप्तपद्यन्तसंस्काररूपविवाहाधीनत्वेन "विवहेद्विधिवत् पुमान्" इत्यादिवचनानुरुद्धवरकर्तृकतादृशविवाह-

संस्कारस्य च दानाधिकारिपित्रादिकर्तृककन्याकर्मकवरसंप्रदानक-दानवरकर्तृकप्रतिग्रहोत्पन्नस्वत्वपूर्वकत्वेनैव समाम्नानात्, तद्दाने च 'प्रदानं प्रागृतोः' इत्यादिभिः ऋतुदर्शनपूर्वकाल-स्यैवाम्नानाच्च तत्काले कन्यामददतां पित्रादीनां दानाधिकृतानाम् "अप्रयच्छन् दोषी" "अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।" कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः" इत्यादिवचनक-दम्बेन स्वकर्तृकदानाभावप्रयोज्यभर्तृसंगमाभावप्रयोज्यस्वकन्याधि-करणकसमुत्पत्स्यमानगर्भोत्पत्तिप्रतिबन्धप्रयोज्यभ्रूणहत्यादोषभाजन-त्वस्य समाम्नानाच्च समुत्पत्स्यमानसन्तानरूपादृष्टफलप्रतिबन्धकानां सर्वेषामपि भ्रूणहत्यादोषावाप्तेः सार्ववर्णिकतया समत्वाद्दुष्टत्वं रजो-दर्शनानन्तरविवाहस्य न कदापि घटत आर्यजातीयकन्यानामन्या-सामपीत्येव सिध्यति। अदृष्टफलरहितमतान्तरस्थानाम् अनार्यजातीया-नामपि समुत्पत्स्यमानसन्तानरूपादृष्टफलप्रतिबन्धस्यान्याय्यत्वौ-चित्यादुभयफलवन्मतस्थानामार्यजातीयानामुभयफलप्रतिबन्धप्रयो-ज्यदोषाधिक्यप्राप्तेरप्यत्यन्तव्यक्तत्वात्। अत एव—"उत्पादन-मपत्यस्य जातस्य परिपालनम् । प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥ अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा । दाराधीन-स्तथा स्वर्गः पितॄणामात्मनश्च ह ॥" इत्यादिवचनैर्मन्वादिभिः अपत्योत्पादनादिदृष्टफलकत्वं स्वर्गाद्यदृष्टफलकत्वं धर्मकार्या-द्यौपयिकत्वं च भार्याया आम्नातं सार्ववर्णिकतया संगच्छते। अत एव च "गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्। कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥ दृष्टरोमा त्वपत्यघ्नी कुलघ्न्यु-

द्गतयौवना । पतिघ्न्याविष्कृतरजाः ततस्ताः परिवर्जयेत् ॥ अष्ट-वर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशवर्षा भवेत् कन्या अत ऊर्ध्वं रजस्वला ॥" इत्यादिपाराशरस्कान्दादिवचनानि शतशः सहस्रशश्च अष्टवर्षादिवयस्कबालिकादानस्य नाकपृष्ठाद्यवाप्तिफलकत्वं दृष्टरजस्कादानस्य रौरवाद्यवाप्तिफलकत्वं च दातॄणां दृष्टरोमादि-कन्यापरित्यागं विविवक्षूणां च समुद्घोषयन्ति संगच्छन्ते । न च "यावत्पञ्चाशदब्दानि परतो दशवत्सरात् । तत्कालजमिति प्रोक्तं रजः स्त्रीणां स्वभावजम् ॥" इत्यादिधर्मप्रवृत्तिधृतवचनानुसारेण एकादशादिपञ्चाशदब्दान्तरजोदर्शनस्य स्वाभाविकत्वेन, "प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते" इति रजःप्रवृत्तिनिय-मस्यापि प्रागुक्तवचनविरोधपरिहाराय बाहुलकत्वकल्पनवत् "अत ऊर्ध्वं रजस्वला" इत्युक्तेरपि "त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देत नग्निकाम्" इत्यादिवचनानुरोधेन साम्भावनिकत्वस्यावश्यक-तया तथैव माधवाचार्यैर्व्याख्यातत्वेन च "रौरवं तु रजस्व-लाम्" इत्युक्तेरपि "त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्" "प्रदानं प्रागृतोः" इत्यादिवचनानुरोधेन दृष्टरजस्कादान-निषेधपरत्वमेव न त्वेकादशवर्षादिदाननिषेधपरत्वमिति कल्प-नया "ऊर्ध्वं दशाब्दाद्या कन्या प्राग्रजोदर्शनात्तु सा । गांधारी स्यात् समुद्वाह्या चिरञ्जीवितुमिच्छुना ॥" इत्याद्याश्वलायनादिवचन-विरोधपरिहारेण दृष्टरजस्कादानस्यैव सर्वनिन्दितत्वाच्च सकल-वचनैकवाक्यतया "सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः" इत्यादिमहाभारतादिवचनानुरोधेन च गर्भाष्टमादिदशमाब्दान्तवय-

स्कादानस्य दातृनाकपृष्ठादिफलविशेषप्रापकत्वेऽपि एकादशाब्दादि-रजोदर्शनपूर्वावस्थकन्यादानस्य तद्विवाहस्य चाप्रतिषिद्धत्वात् कथमेकादशाब्दादिरजोदर्शनपूर्वकालस्य गौणत्वोक्तिर्घटते इति वाच्यम्—"प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति। मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥ व्यञ्जने तु कुलं हन्यात् पितॄन् हन्यात् पयोधरे। हन्यादिष्टं च पूर्तं च प्राप्ते रजसि कन्यका। वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्न हि। अन्तःपुष्पं भवत्येव पनसोदुम्बरादिवत्। अतस्तु तत्र कुर्वीत तत्संगं बुद्धिमान्नरः ॥" इत्यादिवचनैः पराशरादिभिरान्तरिकरजःप्रादुर्भावस्यापि पतिका-मनाप्रयोजकत्वेनान्तःपुष्पवतीसंगस्याप्यनुज्ञातत्वेन रजःप्रादुर्भाव-प्रयोज्यव्यञ्जनाद्याविर्भावदशायामदातुर्दानाधिकारिणस्तदीयका-मनाप्रतिबन्धकत्वेन तदीयशोणितपानकुलघातपितृघातेष्टापूर्त-घातादिदोषबाहुल्यावाप्तिकथनेन चान्तरिकरजःप्रादुर्भावस्यापि अविवाहिताया दोषप्रापकत्वात् निषेधविषयत्वेन एका-दशाब्दादिकालस्य गौणत्वम्। एवं "षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः। सोमो भुङ्क्ते ततस्तद्वत् गन्धर्वश्च तथानलः।" इत्यादिभिरासप्तमाब्दमविवाह्यत्वोक्त्या तन्निषेधविषयत्वेन च निषेधविषयत्वसमानाधिकरणविधिविषयत्वरूपं गौणत्वं तयोः। निषेधविषयत्वासमानाधिकरणविधिविषयत्वरूपमुख्यत्वं तु गर्भाष्ट-मादिदशमाब्दान्तस्य कालस्येति निर्दिष्टव्यवस्थाया निर्दोषत्वात्। ननु "त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती। ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ अदीयमाना भर्तार-

मधिगच्छेद्यदि स्वयम् । नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥" इत्यादिवचनैः मन्त्रादिभिः कन्यायाः पुष्पदर्शनानन्तरकालिकवर्षत्रयोदीक्षणविधेः, तदूर्ध्वकालिककन्याकर्तृकपतिवेदनविधेश्च सत्त्वेन तथा स्वयं भर्त्रधिगमे कन्याया यत्किञ्चिद्दोषानवाप्तिकथनेन तदुद्वोढुः तथा दोषानवाप्तिकथनेन च रजोदर्शनानन्तरविवाहस्य सर्ववर्णसाधारण्येनादुष्टत्वे प्राप्ते दुष्टत्वोक्तिस्साहसिकीति चेन्न—"अतःपरं प्रवक्ष्यामि योषितां धर्ममापदि" इति प्रतिज्ञाय मनुना कन्याया आपद्धर्मत्वेनैव वर्षत्रयोदीक्षणाविधेः तदूर्ध्वकालिकस्वयंभर्त्रधिगमविधेश्च प्रवृत्तत्वात्; गुणवद्वरलाभे च "ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरम्" इति विष्णवादिस्मृतऋतुत्रयानन्तरकालिकस्वयंवरणविधेश्च स्त्रीणामापद्धर्मत्वेनैव बोधनात्। "पिता रक्षति कौमारे" इत्यादिवचनैः स्त्रीणां स्वशरीरे स्वत्वस्याभावेन "स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ।" इत्यादिभिः पित्रादिदातृनिष्ठस्वामित्वानिवर्तनपूर्वकम् ऋतुत्रयवर्षत्रयान्यतरोत्तरकाले स्वत्वप्रापणद्वारा "ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्" इत्यादिवचनान्तरैकवाक्यतया चतुर्थवार्षिकस्वयंवरणस्य परिसंख्यया विहितत्वेन "त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुतृमती सती । ततश्चतुर्थे वर्षे तु स्वयं भर्तारमर्जयेत् ॥ प्रजा न हीयते तस्या रतिश्च भरतर्षभ । अतोऽन्यथा वर्तमाना भवेद्वाच्या प्रजापतेः" इत्याद्यानुशासनिकभीष्मवाक्यानुरोधेन तादृशास्वयंवृतपतिकायाः प्रजादोषरतिदोषयोरभावबोधनेन विवाहाभावेनावस्थाने प्रजापतिनिन्दास्पदत्वाभिधानेन च 'नैनः किंचि-

दवाप्नोति' इति वाक्येन स्वीयर्तुव्यर्थीकारादीनां स्वापराधप्रयोज्यत्वाभावेन भ्रूणहत्यादिदोषानाक्रान्तत्वस्यैव कन्यायाम्, तत्परिणेतारि च "न च यं साधिगच्छति । एवं चोपनतां पत्नीं नावमन्येत् कदाचन ।" इत्यादिवचनैः तादृशापद्गतकन्याप्रत्याख्याननिषेधेन दृष्टर्तुकन्यापरित्यागविधिप्रतिप्रसवभूतेन पतिहननादिदोषाक्रान्तकन्यास्वीकारजन्य हननादिदोषाभाजनत्वमात्रस्यैव च बोधनेऽपि धर्माधिकारप्रतिबन्धकरजोदर्शनजन्यप्रत्यवायदुष्टत्वस्यानिवृत्तेः । अत एव 'प्रजा न हीयते' इत्यादिना प्रजाहैन्याद्यभावमात्रबोधनं धर्महैन्याद्यभावाबोधनं च स्वरसत उपपद्यते । अत एव च "अविवाहिता तु या कन्या पुष्पयुक्ता भवेद्यदि । चान्द्रायणं व्रतं कुर्यात् सर्ववर्णेष्वयं विधिः ॥" इति सार्ववर्णिकत्वेन चान्द्रायणव्रतप्रायश्चित्तविधानं रिपुञ्जयोक्त निर्णयसिन्धावाश्वलायनेन "कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः । शुद्धिं च कारयित्वा तामुद्वहेदनृशंसधीः । पिता ऋतून्स्वपुत्र्यास्तु गणयेदादितस्सुधीः । दानावधि गृहे यत्नात् पालयेच्च रजोवतीम् । दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि । दातव्यैकापि निःस्वेन दाने तस्या यथाविधि । दद्याद्वा ब्राह्मणेष्वन्नं अतिनिःस्वस्सदक्षिणम् । तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥ उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः । अदृष्टरजसे दद्यात् कन्यायै रत्नभूषणम् । तामुद्वहन् वरश्चापि कूश्माण्डैर्जुहुयाद्द्विजः ॥" इति वचनैर्विवाहात् प्राक्पुष्पवत्या विवाहने दातुः परिणेतुर्वरस्य परिणीयमानायाः कन्यायाश्च पार्थक्येन प्रायश्चित्तविधानं च संगच्छते ।

शौनकेनाप्येतदेव प्रायश्चित्तमन्ते "कूश्माण्डैर्जुहुयाद्घृतम्" इति द्विजपदाघटितवचनैरुक्तम् । तथाप्याश्वलायनवचनैकवाक्यतया द्विजविषयकमेवेदं प्रायश्चित्तमिति द्रष्टव्यम् । ननु प्रायश्चित्तयोः सामानाधिकरण्यस्यैव संपाद्यत्वात् अस्य च द्विजातीयप्रायश्चित्तकदम्बस्य निरुक्तसार्ववर्णिकचान्द्रायणप्रायश्चित्तेन समुच्चयात् द्विजातीनां चान्द्रायणव्रतरूपरिपुञ्जयविहितप्रायाश्चित्तवैशिष्टयेनानुष्ठानमेव शास्त्रीयं घटते । युक्तं चैतत्—आपस्तम्बेन श्रौतसूत्रे "एकस्मिन् दोषे श्रूयमाणानि प्रायाश्चित्तानि समभ्युच्चीयेरन्नर्थान्तरत्वात्" इति सूत्रेणैकस्मिन् दोषे बहुप्रायश्चित्तश्रवणे तेषां भिन्नभिन्नप्रयोजनसंपादनद्वारा पामरोगादिनिवर्तने तैलरेकपानादीनामिव विशिष्टदोषनिर्हरणक्षमत्वात् समुच्चयेनैव सर्वेषामनुष्ठानमिति सिद्धान्तितत्वात् । तथा च पापाभावे प्रायश्चित्तविधानस्यैवाप्रसक्तेर्निषेधाविषयत्वे सति तद्दोषापहारककर्मान्तरानुष्ठानसहकृताभ्यनुज्ञाविधिविषयत्वरूपापद्धर्मत्वस्याप्यनुपपत्तेरुक्तरीत्यैव व्याख्येयम् । एवं च स्वयंवृतपतिकाविवाहेऽपि एतत्प्रायाश्चित्तानुष्ठानपूर्वकस्यैव विवाहस्य धर्म्यत्वमिति वस्तुतत्त्वम् । न चात्र द्विजपदश्रवणेन द्विजातिव्यतिरिक्तानां न दोष इति वाच्यम्—पूर्वोक्तदिशा भ्रूणहत्यादिदोषाणां चान्द्रायणप्रायाश्चित्तस्य च सार्ववर्णिकतया समाम्नानेन रजस्वलाविवाहस्यापद्धर्मत्वेन समाम्नानाच्च तत्र द्विजपदस्य धर्माधिकार्युपलक्षकत्वात् । अत एव च "अनुद्वाहिता या कन्यार्तवेन युज्यते सा वृषली" "सा कन्या वृषली स्मृता" "तत्पतिर्वृषलीपतिः" इत्यादिषु बहुषु वचनेषु

धर्मानधिकारित्वबोधकवृषलीत्वविधानादिकं संगच्छते । स्वतो वृषलीषु वृषलीत्वातिदेशस्य वैयर्थ्येन "शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वात् धर्ममर्हति" इत्यादिना पौराणिकमन्त्रैः शास्त्रविहितधर्मानुष्ठानाधिकारस्य शूद्राणामपि स्मृतत्वेन च चान्द्रायणविधायकवाक्ये द्विजातीयेष्वित्यनुक्त्या सर्ववर्णेष्वित्युक्त्या च स्वविहितधर्मानधिकारित्वोपलक्षकत्वस्यैव वक्तव्यत्वात् । एवं च न केष्वपि वर्णेष्वदुष्टो रजस्वलाविवाहः, किं त्वापद्युक्तप्रायाश्चित्तादिपूर्वकमभ्यनुज्ञायते शास्त्रेणेति व्यवस्था सिध्यति । एवमापद्यभ्यनुज्ञातोऽपि यावच्चतुर्थवर्षं कथंचित्प्रायश्चित्तादिसहकृतो रजस्वलाविवाहो ब्राह्मणातिरिक्तविषयक एव न ब्राह्मणविषयकः । तथाहि—"या कन्या पितृवेश्मस्था यदि पुष्पवती भवेत् । असंकृता परित्याज्या न पश्येत्तां कदाचन ॥ विवाहे च न योग्या स्यात् लोकद्वयविगर्हिता । एतां परिणयन्विप्रो न योग्यो हव्यकव्ययोः ॥ न तस्यां जनयेत्पुत्रं कानीन इति कथ्यते । माता पिता च पुत्रश्च त्रयस्ते वृषलाः स्मृताः ॥ यदा पुष्पवती कन्या तदैव त्यक्तुमर्हति । न तत्र दोषस्तस्याऽस्ति गेहस्था चेत्स दोषभाक् ॥" इति हेमाद्रौ मार्कण्डेयेन "यदा रहः पुष्पवती द्विजस्तामुद्वहेद्यदि । कालान्तरे यदा ज्ञाता तदा तां संपरित्यजेत् ॥ यदीच्छेदात्मनः शुद्धिं तदा चान्द्रायणं चरेत् । कामातुरस्तदा वर्तेत्स चण्डालसमो भवेत् ॥ पुत्रोत्पत्तिर्यदि भवेत् तदा पतित एव सः । " इति गौतमेन च "तदानीं न परित्याज्या पूर्वं पुष्पवती न चेत् । प्रायश्चित्तं तदा कृत्वा कर्म कुर्वन्न दोषभाक् ॥ " इति विवाहमध्यदृष्टपुष्पाप्रायाश्चित्तविधायकवाक्यशेषे

गर्गाचार्येणापि विवाहात् पूर्वं पुष्पवत्या ब्राह्मण्याः परित्यागविवाहाभावयोरेव प्रायश्चित्तत्वेन प्रतिपादनात् रहः पुष्पवत्या अज्ञानेन परिणये जातेऽपि पश्चात् ज्ञाने परिणीताया अपि परित्यागविधानेन च ब्राह्मणीनां परित्यागरूपप्रायश्चित्तस्य विहितत्वेन रजोदर्शनोत्तरविवाहाभ्यनुज्ञापकानां प्रायश्चित्तान्तरविधायकानां च सर्वेषामपि वचनानां सामान्यविशेषन्यायेन ब्राह्मणातिरिक्तविषयकत्वस्यैव लाभात् । अन्यथा परित्यागविधिवैयर्थ्यस्य दुष्परिहार्यत्वादित्येव व्यवस्था निरवद्या सिध्यतीत्यलम् । विस्तरस्तु धर्मव्यवस्थावज्रदर्पणे मदीये आर्यकन्याविवाहकालव्यवस्थाबिम्बादनुसंधेयः ॥

इति तृतीयं पुष्पिणीपरिणयव्यवस्थावज्रम्

---

## चतुर्थं शारदाशासनव्यवस्थावज्रम्

अधुना भारतदेशे श्रीप्रभुभिरङ्गीकृत्य प्रवर्त्यमानमन्ततो निर्बन्धरजस्वलाविवाहप्रापकं संघसंस्कारकम्मन्यहरविलासशारदानामकेन केनचिद्भारतशासनसभायां समुद्घाटितं कलिभृत्यैः संभूय सर्वैः सभ्यैः संमोह्य च बलात् प्रभूननुमानितं बाल्यविवाहनिषेधनामकं राजशासनमार्यधर्माधिकृतैरार्यजातीयैरदोषावहतयानु-

वर्तितव्यं भवेत् कैरपि वा कैरपि वा प्राणादिपणप्रदानेनापि कथं-चिदपि नानुवर्तितव्यं भवेत्, यदि नानुवृत्तं स्यात्तर्हि राजदण्डस्य तदुक्तस्यानुभवस्स्यात्, यद्यनुवृत्तं स्यात् तर्हि शास्त्रोक्तदोषभाजनं स्यात्। ईदृशविषमदशापन्नानां जनानां तदनुवर्तनाननुवर्तनयोः का व्यवस्था गतिश्च का तेषामिति प्रश्नसमालोचने प्रागुक्तव्यवस्था-दिशा स्वधर्मानुष्ठानकाङ्क्षिभिरार्यजातीयैः कैरप्यदुष्टतयानुवर्तितव्यं न भवेदेवेति व्यवस्था स्फुटैव। सर्वेषामपि आपद्धर्मत्वेनापद्धर्मा-णामनापद्यननुष्ठेयत्वेन परित्याज्यत्वस्यैव स्मरणेन दोषबाहुल्य-प्रापकत्वस्मरणेन च प्रायश्चित्तवैशिष्ट्येनाभ्यनुज्ञातेषु शास्त्रनिषिद्धेषु कर्मसु बलात्कारेण दैववशाद्वाप्यनुष्ठेयत्वेन प्राप्तेष्वधर्म्यबुद्धिपूर्वक-मगत्यानुष्ठितेषु च यथावदनुष्ठितानां तत्तत्प्रायश्चित्तानां तत्तद्दोष-निर्णेजकत्वेऽपि प्रकृते शारदाशासनप्रवर्तनस्याद्यावधि प्रजायत्तत्वेन निश्चितत्वात् प्रभुभी राजकृतस्वीयनिर्बन्धाभावेन प्रजानामौदासी-न्ये राजदण्डाभावात् प्रजाकर्तृकराजसंनिधिनिवेदन एव दण्डस्य प्राप्त्या समग्रराजनिर्बन्धाभावात् प्रजानिर्बन्धस्याप्यान्तरङ्गिक-विरोधादिमूलकत्वेनैव तत्र तत्र प्राप्यत्वेन सार्वत्रिकत्वाभावात् समग्रराजापदोऽनिर्वचनीयत्वेन तच्छासनव्याजेन दोषभीतिराहि-त्येन च तत्र प्रवृत्तौ समग्रदोषसंक्रान्तेरशक्यवारणत्वेन विहित-प्रायश्चित्तानां सर्वेषामप्यत्र विवाहप्राक्कालिकत्वेनानुष्ठेयतया विवाहोत्तरं पश्चात्तापेऽपि गत्यभावात् प्रायश्चित्तवार्ताया अपि कुत्राप्यश्रूयमाणत्वात् शास्त्रोक्तदोषभाजनत्वस्यानुष्ठीयमानविवाहेष्व-व्याहतत्वात्। भविष्यति तथैव राजनिर्बन्धे तत्तत्प्रायश्चित्तानुष्ठानै-

स्तत्तद्दोषनिवृत्तिस्तदा भविष्यतीत्यंशस्योक्तप्रायत्वाच्च । येषां तत्तत्प्रायश्चित्तानुष्ठानपूर्वकमभ्यनुज्ञातो रजस्वलाविवाहस्तेषां क्षत्रियादीनां तदा तथात्वेऽपि पूर्वोक्तव्यवस्थादिशा ब्राह्मणीनां परित्यागविवाहाभावयोरेव विहितत्वेन गत्यन्तरानुक्तेश्च ब्राह्मणा-नामापद्धर्मत्वेनाप्यनुवर्तनायोग्यत्वमस्य शासनस्य व्यक्तमेव । ब्राह्मणत्वसमुच्छेदकस्यास्य शासनस्य यथाकथंचिदननुवर्तनं प्राणादिपणप्रदानेनापि परलोकभीतानां ब्राह्मणानाम् ऐहिकधर्मा-नुष्ठानकाङ्क्षिणामपि राजदण्डसहनेनापि समुचितम् । पश्चात्प्राय-श्चित्तविशिष्टेन न तु राजदण्डभीत्या प्रायश्चित्तरहितरजस्वला-विवाहनं समुचितं स्वजातिकुलधर्मादिरक्षणकामुकानां ब्राह्मणाना-मित्यहो कलेरनुग्रहो ब्राह्मणेषु येन येष्वशनिपाततुल्यमीदृशं ब्राह्मण्य-निर्मूलकं शासनं प्रवर्तितमिति खेदास्पदमिदम् । तथा च राज्ञा बलान्निर्बन्धपूर्वकमेतच्छासनप्रवर्तने च राजापद्धर्मत्वेन रजस्वला-विवाहप्रवृत्तौ निरुक्तप्रायश्चित्तानुष्ठानपूर्वकाधर्म्यबुद्धिसहकृतायां यथावदनुष्ठितप्रायश्चित्तेन शास्त्रोक्तदोषनिर्णेजनं भवति क्षत्रिया-दीनामित्येव व्यवस्था ब्राह्मणानां तु पश्चात्कर्तव्यप्रायश्चित्त-विशिष्टकारागारवासादिराजदण्डनमेव सोढव्यम् । न तु प्रायश्चित्त-रहितरजस्वलाविवाहेन राजशासनानुवृत्तेन स्वजातिकुलधर्मभ्रंशः सोढव्य इत्येव व्यवस्था गत्यन्तरहीनास्तीत्यलं पल्लवितेन ॥

## इति चतुर्थं शारदाशासनव्यवस्थावज्रम्

## पञ्चमं रण्डोद्वाहव्यवस्थावज्रम्

आर्यधर्माधिकृतेष्वार्यजातीयेषु केष्वपि वा वर्णेषु उत्पन्नानां दैवात् प्राप्तवैधव्यानां क्षतयोनिकानामक्षतयोनिकानां वा स्त्रीणां पुनर्विवाहः कथंचिदपि कासामप्यभ्यनुज्ञायते न वा इति विचारे नाभ्यनुज्ञायते शास्त्रेणेत्येव व्यवस्था। दृश्यन्ते चात्र चतुर्विधानि वचनानि धर्मशास्त्रेषु (१) वाग्दानाद्यनन्तरं सप्तपदीनिष्क्रमणात् प्राक् वरनाशमरणादौ पुनर्विवाहविधायकानि कानिचित् (२) सप्तपद्यनन्तरमप्यक्षतयोनिकानां भर्तृमरणादौ पुनर्विवाहविधायकानि कानिचित् (३) अपुत्रकाणां विधवानां देवरादेकपुत्रमात्रोत्पादननियोगविधायकानि कानिचित् (४) भर्तृसहगमनयावज्जीवब्रह्मचर्यान्यतरविधायकानि विधवानामन्यानि चेति। तत्र प्राथमिकेंऽशे वसिष्ठेन "अद्भिर्वाचा च दत्ताया म्रियेतादौ वरो यदि। न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा॥" इति, व्यासेनापि 'कन्यान्यस्मै प्रदातव्या वाग्दाने तु कृते वरे। कृतेऽन्यस्मै प्रदातव्या मृते सप्तपदात् पुरा॥ दत्तामपि हरेत् कन्यां सगोत्रोढां तथैव च। मन्त्रसंस्काररहिता देयान्यस्मै वराय च॥' इति, मनुनापि–यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेनानुजो विन्देत देवरः॥ कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः। देवराय प्रदातव्या यदि कन्यानुमन्यते॥" इत्येवंजातीयकैर्वचनैः सप्तपदीनिष्क्रमणात् प्राक् वरमरणे स्त्रिया वरान्तरेण विवाहो विधीयते। अत्रांशे न केषामपि विप्रतिपत्तिः। न च वाग्दत्तादीनां पुनर्भूणां वक्ष्यमाणबोधायनादिवचनैः सिद्धत्वेन वरान्त-

रेण विवाहे तासां पुनर्भूत्वापत्त्या वर्जनीयत्वमेव तदुक्तरीत्या प्राप्नोतीति वाच्यम् "नष्टे मृते" इत्यादिवक्ष्यमाणवचनसिद्धपरिसंख्यया नाशमरणप्रव्रजनक्लीबत्वपातित्यातिरिक्तहेतुकृतवरान्तरविवाह एव पुनर्भूत्वस्य तासां तद्वचनबोधितत्वेन तदन्तर्गतमरण एव प्रकृतवचनैः पत्यन्तरविधानेन नासां पुनर्भूत्वमित्यदोषात् । किं च प्रधानहोमादिसप्तपद्यन्तसंस्कारस्य वा पितृगोत्रतः पतिगोत्रप्रापणस्य वा विवाहपदार्थत्वेन वीरमित्रोदयादिषु परिष्कृतत्वात् वाग्दानं च प्रदानं चेत्यादिधर्मप्रवृत्तिधृतपूर्वोक्तवचनेन वाग्दानादीनां विवाहस्य पूर्वाङ्गत्वेन ब्रह्मचर्यादीनामुत्तरांगत्वेन च "पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥" इति मनुना, "नोदकेन न वा वाचा कन्यायाः पतिरुच्यते । पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥" इति यमेन च, पतिभार्यात्वसिद्धेः सप्तमपद एव पाणिग्रहणसंस्कारेणाभिहितत्वात्, 'स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे' इति मन्वादिभिः सप्तमपद एव भर्तृगोत्रप्राप्तेः स्त्रीणामभिहितत्वाच्च, "चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः । भर्त्रा संयुज्यते नारी तद्गोत्रा तेन सा भवेत् ॥" इति च्यवनेन, 'विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु । एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ॥ इति बृहस्पतिना चाश्वलायनानां चतुर्थीहोममन्त्रपठनोत्तरकालमेव पितृगोत्रनिवृत्त्या पतिगोत्रप्राप्तेराभिहितत्वाच्च वाग्दानोदकदानादिभिस्समग्रपतिभार्यात्वयोरनिष्पन्नत्वेनानुत्पन्नसमग्रस्वामित्ववतो मरणादौ पत्यन्तरविधानस्य न्यायसिद्धत्वाच्च । एतेन "नष्टे मृते प्रव्रजिते क्लीबे च पतिते

पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥" इति रण्डोद्वाह-कामुकावलम्बनभूतं मनुनारदपराशरवचनमपि व्याख्यातप्राय-मिति व्यक्तम् । प्रदर्शितवचनैकवाक्यतासंपत्तये "पतिस्समास एव" इति पाणिनिस्मृतिबलेन च "स तु यद्यन्यजातीयः पतितः क्लीब एव वा । विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा । दत्तापि देया सान्यस्मै सप्रावरणभूषणा । विधिवत्प्रति-गृह्यापि त्यजेत्कन्यां विगर्हिताम् । व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥" इति कात्यायनेन "कुलशीलविहीनस्य षण्डादिपतितस्य च । अपस्मारिविकर्मस्थरोगिणां वेषधारिणाम् । दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च । मन्त्रसंस्काररहिता देयान्यस्मै वराय च । अन्यथा तु हरन्दण्ड्यो व्ययं दद्यात्तु सोदयम्" इति काश्यपादिवचनकदम्बैकवाक्यतया नाश-मरणाद्यतिरिक्तनिमित्तेष्वपि प्राप्तौ तन्निवारणाय च "वाचा दत्ता मनोदत्ता अग्निं परिगता सप्तमं पदं नीता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः, तां गृहीत्वा न प्रजां न धर्मं विन्देत्" इति बोधायनेन "सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः । वाचादत्ता मनोदत्ता कृतकौतुकमंगला । उदक-स्पर्शिता या च या च पाणिगृहीतिका ॥ अग्निं परिगता या च पुनर्भूः प्रसवा च या ॥ इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत् । प्ररोहत्यग्निना दग्धः पादपः सुचिरादपि । न च पौनर्भवादग्धं कुलं क्वापि प्ररोहति ॥" इति कश्यपादिभिश्च वाग्दत्तादीनां परवराय दाने पुनर्भूत्वस्याम्नानेन पूर्ववरमरणादावपि

विवाहाभावप्राप्तौ तत्प्रतिप्रसवत्वेन नाशमरणादिषु पञ्चस्वेवापत्सु परिसंख्यया पत्यन्तरविधायकत्वेन च नष्टे मृत इत्यादिवचने अपतावित्येव च्छेदस्य कर्तव्यत्वेन नाज्ञिवयुक्तन्यायेन पतिभिन्नपति-सदृशादिनाशादावेव पत्यन्तरविधानमित्यर्थस्यैवावश्यवक्तव्यत्वेन च तद्भिन्नत्वतत्सादृश्ययोरनुत्पन्नसमग्रस्वामित्ववत्येव सिद्धया तन्नाशमरणादावेव पत्यन्तरविधायकत्वमस्य वचनस्येत्यर्थस्य सुव्यक्तत्वात् । बहुषु निबन्धनग्रन्थेषु नष्टे मृत इत्याद्यानुपूर्वीकमेव नारदीयमपि वचनमुल्लिखितं दृश्यते । तथा च नष्टे मृत इत्यादि-वचनस्यापि वाग्दत्तादिपरत्वमेवेति निर्बाधं सिध्यति । अत्रैव विचारे द्वितीयेंऽशे सप्तपद्यनन्तरमप्यक्षतयोनिकानां मृतभर्तृकाणां पुनर्विवाहाभ्यनुज्ञापकेषु वचनेषु युगान्तर-विषयकत्वेन व्यवस्थापि शास्त्रीया स्फुटैव । तथाहि "पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता । सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति ॥" इति मनुवासिष्ठाभ्याम्, "उद्वाहितापि या कन्या न चेत् संप्राप्तमैथुना । पुनः संस्कारमर्हेत यथा कन्या तथैव सा ॥" इति नारदेन, "निसृष्टाया हते चापि यस्या भर्ता म्रियेत सः । पौन-र्भवेन विधिना पुनस्संस्कारमर्हति ॥" इति बोधायनेन चैवमेवं-जातीयकैर्वचनैरुद्वाहिताया अपि अक्षतयोनिकायाः पुनर्विवाहो विधीयत इति यत् परैरभ्युपगम्यते तदपि शास्त्राज्ञानविलसितमात्रम् ; यतः "अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः" इति याज्ञवल्क्येन, "या वा क्लीबं पतितमुन्मत्तं वा पतिमुत्सृज्यान्यं पतिं विन्दते वा सा पुनर्भूर्भवति" इति तेनैव वसिष्ठेन 'कन्या चाक्षतयोनिर्या

पाणिग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणि ॥" इति नारदादिभिश्च पुनर्विवाहिताया अक्षतयोनिकाया अपि पुनर्भूत्वस्याम्नानेन, बोधायनेनापि "पौनर्भवेन विधिना" इति स्पष्टीकरणेन च पुनस्संस्कृतायाः पुनर्भूत्वस्य "अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः" इति वसिष्ठवचनेन तदुत्पन्नसन्तानस्य पौनर्भवत्वस्य च सिद्धावपि 'अपुत्रेण सुतः कार्यो यादृक्तादृक्प्रयत्नतः । पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च ॥" इति मनुनौरसपुत्ररहितस्य दत्तक्षेत्रजादिपुत्रान्तरसंपादनस्य विहितत्वेन द्वादशविधपुत्रवद्युगान्तरेषु पौनर्भवस्याधमस्यापि पुत्रत्वेन परिगणनात् स्वीकाराच्चैषां वचनानां युगान्तरविषयकत्वमेव न कलियुगविषयकत्वमिति स्फुटत्वात् । दत्तौरसेतरषां तु पुत्रत्वेन परिग्रहः इति कलिवर्ज्यप्रकरणे सर्वत्र दत्तौरसातिरिक्तपुत्राणां पुत्रत्वेन कलौ परिग्रहाभावस्यैवोपपादनात् । अत एव व्यासेन "ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा। कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥' इति, क्रतुनापि "देवरान्न सुतोत्पत्तिः दत्ता कन्या न दीयते । न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुम् ॥" इति, वायवीयसंहितायामपि "मृते जीवति वा पत्यौ न सुतो देवरादितः । क्रान्तसप्तपदां कन्यां नोद्वहेच्च कलौ युगे ॥" इति, बृहन्नारदीये 'दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च । बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः ॥' इत्यादिभिरक्षतयोनिकानां विधवानां पुनरुद्वाहस्य कलौ निषिद्धत्वात् । युगान्तरेष्वपि "शूद्राणामेव धर्मोऽयं पत्यौ प्रेतेऽन्यसंश्रयः । लोभान्मूढैरविद्वद्भिः क्षत्रियैरपि

चर्येते ॥ अज्ञातश्च द्विजो यस्तु विधवामुद्वहेद्यदि । परित्यज्य च तां चैव प्रायश्चित्तं समाचरेत् ॥" इति वृद्धमन्वाश्वलायनादिवचनानुरोधेन शूद्रधर्मत्वस्य द्विजातिधर्मत्वाभावस्य च व्यक्तत्वेन दत्तौरसातिरिक्तपुत्रपरिग्रहाभाववत्यत्र कलौ शूद्राणामपि विधवोद्वाहस्य निषिद्धत्वाच्च । एतेन नियोगविधेरपि युगान्तरविषयकत्वमेवेति प्रदर्शितवचनेषु सुव्यक्तत्वात् न तृतीयांशस्य पृथग्व्याख्यानापेक्षा अप्रकृतत्वाच्चेति विरम्यते । अनन्तशयनमुद्रापितनारदीयमनुसंहितास्थस्य "पत्यौ प्रव्रजिते नष्टे क्लीबे च पतिते मृते" इति भिन्नानुपूर्वीकनारदवचनपाठस्य प्रामाणिकत्वाभिनिवेशेऽपि युगान्तरविषयकत्वस्यैव निरुक्तदिशा लाभान्निरुक्तव्यवस्था निर्बाधं सिध्यति । निखिलमिदमभिसंधाय मनुना "नौद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः ॥ अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः । मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥' इत्यादिना पशुधर्मत्वमेव न मानवधर्मत्वमिति कण्ठत एव नियोगविवाहादिकं विधवानां निरस्तम् । स्मृतिसारसंग्रहे च "विधवोद्वाहनं कर्म चतुर्युगसहस्रके । न कर्तव्यं न कर्तव्यमृषयः प्रवदन्ति हि ॥" इति सर्वयुगनिषिद्धत्वेनोद्घोषितम् । अत एव मन्वादिभिः "ब्रह्मचर्यं चरेद्वापि प्रविशेद्वा हुताशनम्' इत्यादिवचनकदम्बेन विधवनां सहगमनब्रह्मचर्यान्यतराश्रयणमेव विकल्पेन विहितं च संगच्छत इत्यलं पल्लवितेन । एतेनात्रत्यश्चतुर्थोऽशोऽपि व्याख्यातः ॥

## इति पञ्चमं रण्डोद्वाहव्यवस्थावज्रम्

## षष्ठं चण्डालास्पृश्यतानिवारणव्यवस्थावक्त्रम्

पञ्चमादिपदव्यवह्रियमाणानां चण्डालानां विभिन्नविभिन्नजातीयानां दूरतोऽस्पृश्यता शास्त्रानुमत्या निवारयितुं शक्यते न वेति विचारे न कयापि दिशा कथंचिदपि निवारयितुं शक्यत इत्येव व्यवस्था। तथाहि बृहदारण्यके "तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति" अन्त्यं जनं चण्डालं प्रति नेयान्न गच्छेन्न समीपस्थो भवेदन्तं तन्निवासस्थानमपि नेयान्न गच्छेद्यतः पाप्मानं तद्गतपापं कीदृशं मृत्युं मरणधर्माणं स्वधर्मभ्रंशकं पातित्याधायकमहमन्ववायान्यनुगच्छेयमिति नेत् भीतो न गच्छतु इत्यर्थकश्रुत्या साक्षाच्चण्डालसमीपगमनतन्निवासस्थानगमने प्रतिषिध्येते। तथा पराशरेण परेषां पापिपापसंक्रमणे विषये 'आसनात् शयनात् यानात् संभाषात् सहभोजनात्। संक्रामन्ति हि पापानि तैलबिन्दुः' इति, देवलेन च 'संल्लापस्पर्शनिश्वाससहयानासनाशनात्। याजनाध्यापनात् पानात् पापं संक्रमते नृणाम्॥'' इति सहासनसहशयनसहयानसंल्लापादीनां पापिपापसंक्रमणहेतुत्वेन निरूपितत्वात्। छान्दोग्ये च 'अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्यन्ते श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा'' इति श्रुत्या गुरुतरपापिनां श्वसूकरचण्डालजन्मप्राप्तिनिरूपणेन 'चण्डालश्चाधमो नृणाम्' इत्यादिभिः स्मृतिभिरपि चण्डालस्य पापिष्ठत्वस्य निरूपणेन च चण्डालानां च शुद्धसंकीर्णसंकीर्णसंकीर्णभेदेन

बहुविधानामाम्नानेन सर्वेषामपि चण्डालपदेनान्त्यजपदेन च व्यवहारस्य सिद्धतयात्राविशेषात् सर्वेषामपि ग्रहणम् । तादृश-चण्डालदर्शनभाषणस्पर्शनादौ सर्वस्मृतिनिषिद्धे कलियुगविषय-प्रमाणमूर्धन्यत्वेन विधवोद्वाहादौ विधायकत्वभ्रान्त्या परैरनुगृही-तायाः पराशरस्मृतेरेव वचनानि प्रथमतोऽत्र प्रदर्श्यन्ते । तथा हि तत्र प्रायश्चित्तप्रकरणे "चण्डालदर्शने सद्य आदित्यमवलोकयेत् । चण्डालस्पर्शने चैव सचेलस्नानमाचरेत् ॥ श्वपाकं वापि चण्डालं विप्रः संभाषते यदि । द्विजैस्संभाषणं कुर्यात् सावित्रीं तु सकृज्ज-पेत् ॥ चण्डालैस्सह सुप्तं तु त्रिरात्रमुपवासयेत् । चण्डालैकपथं गत्वा गायत्रीस्मरणाच्छुचिः ॥ चण्डालखातवापीषु पीत्वा सलि-लमग्रजः । अज्ञानाच्चैकभक्तेन त्वहोरात्रेण शुध्यति ॥ चण्डालभाण्ड-संस्पृष्टं पीत्वा कूपगतं जलम् । गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नु-यात् ॥ चण्डालघटसंस्थं तु यत्तोयं पिबति द्विजः । तत्क्षणात्क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥ यदि नोत्क्षिपते तोयं शरीरे यस्य जीर्यति प्राजापत्यं न दातव्यं कृच्छ्रं सान्तपनं चरेत् ॥ चरेत्सान्तपनं विप्रः प्राजापत्यमनन्तरः । तदर्धं तु चरेद्वैश्यः पादं शूद्रस्तथा चरेत् ॥ भुङ्क्तेऽज्ञानाद्द्विजश्रेष्ठः चण्डालान्नं कथंचन । गोमूत्रयावकाहारो दशरात्रेण शुध्यति ॥ अविज्ञातस्तु चण्डालो यस्य वेश्मनि तिष्ठति । विज्ञाते तूपपन्नस्य द्विजाः कुर्वन्त्यनुग्रहम् ॥ दध्ना च सर्पिषा चैव क्षीरगोमूत्रयावकम् । भुञ्जीत सहभृत्यश्च त्रिसंध्यमवगाहनम् ॥ त्र्यहं भुञ्जीत दध्ना च त्र्यहं भुञ्जीत सर्पिषा । त्र्यहं क्षीरेण भुञ्जीत एकैकेन दिनत्रयम् ॥ गृहस्याभ्यन्तरं गच्छेच्चण्डालो यदि कस्यचित् ।

तमगाराद्विनिर्वास्य मृद्भाण्डं तु विसर्जयेत् ॥ रसपूर्णं तु यद्भाण्डं न त्यजेत्तु कदाचन । गोमयेन तु संमिश्रैर्जलैः प्रक्षालयेद्गृहम् ॥" इत्यादि पराशरस्मृतौ । प्रचेतःस्मृतावपि "चण्डालगृहप्रवेशने चण्डालेनैकगृहे वृक्षच्छायायां वा सहावस्थाने चण्डाल एव स्याद्ब्राह्मणानुशिष्टं षाण्मासिकं प्रायश्चित्तं कृच्छ्रं च" इति । च्यवनस्मृतावपि "चाण्डालसंकरेषु भवनदहनं वपनं सर्वभाण्डभेदनं दारवाणां तक्षणं शङ्खशुक्तिसुवर्णरजतशैलानामद्भिः प्रक्षालनं कांस्यताम्राणामाकरे शुद्धिः सौवीरपयोदधितक्राणां परित्यागः" इत्यादिभिः बहुधा बह्वीषु स्मृतिषु च चण्डालसंसर्गे विविधरूपे विविधानां प्रायश्चित्तानामाम्नानेन चण्डालस्त्रीसंसर्गादिषु च कृच्छ्रतमप्रायश्चित्तानामाम्नानेन चाबुद्धिकृतेष्वेवैवंविहितेषु प्रायश्चित्तेषु सत्सु बुद्धिकृतेषु च तेषु कीदृशप्रायश्चित्तानामनुष्ठेयतेति निरूपणस्यापि कृच्छ्रसाध्यत्वेन कथं नाम चण्डालास्पृश्यता शास्त्रानुमत्या निवारयितुं शक्येतेति सुधीभिराकलनीयम् । अत्रेदमवधेयम्— अस्पृश्यता त्वाशौचादिषु शौचकालेष्वप्येकपङ्क्त्युपविष्टेषु ब्राह्मणादिषु भोजनाद्यर्थं स्वजातीयेष्वेव परस्परं निमित्तविशेषेषु विधीयते शास्त्रेणाचर्यते च तथाद्यावधि धर्माधर्मज्ञैः । एवं द्विजातीनां शूद्रादिस्पर्शोऽपि निषिध्यते शास्त्रेण सर्वेष्वपि कालेषु, तथैवाचर्यते च शिष्टैः । परं तु स्वजायादिषु रजस्वलासु सूतकासु च तासां समीपस्पर्शो यथा निषिध्यते तथैव पतितानां चण्डालानां च समीपस्पर्शनिषेधद्वारा दूरतोऽवस्थापनमदृष्टदर्शिना शास्त्रेण तत्तत्पापसमाक्रान्तिरन्येषां मा भूत्सांक्रामिकरोगिणामिवेति विधीयते ।

यथा "युगं युगद्वयं चैव त्रियुगं च चतुर्युगम् । चण्डालसूतकोदक्यापतितानामधः क्रमात् ॥ तत्तत्संनिधिमात्रेण सचेलं स्नानमाचरेत् ॥" इत्यादिवचनैः पराशरादिभिः धर्माधर्मरहस्यवेदिभिर्युगादिमितदेशव्यवधानेनावस्थापनं तत्तद्व्यक्तीनां विधीयते । शास्त्रप्रमाणकैस्तत्र तथानुष्ठानमन्तरा किं कर्तव्यं स्यात् कथं नाम तन्निवारणं शक्येतेति चर्मचक्षुष्कैर्विचारणीयम् । यत्त्वत्र परेषामायुष्मतां कलिभृत्यानां मेधाविलसितं शास्त्रोक्तचण्डाला एते पञ्चमादय इत्यत्र न मानमिति तत्स्वेषां पुंस्त्वे मानवत्वे आर्यत्वे ब्राह्मणत्वादौ च यदस्ति मानं तदेवात्रापीति स्वैरेव समाधाय यथाकथंचित्सन्तोष्टव्यम् । अनादिसिद्धलोकव्यवहार एव खलु मुख्यमत्र मानम् । स्वेषां तथात्वे निखिलवस्तूनामपीदमेतद्वास्त्विवति परिज्ञाने निर्णये च तत्तद्वस्तुलक्षकं शास्त्रमपि तत्र सहकारीति स्वैरपि वक्तव्यम् परप्रश्ने, तदेवात्रापीति कुतो न ज्ञायते मेधाविमन्यैरेभिरिति चित्रीयते चेतः । किं च बृहल्लम्पाकग्रन्थादिषु चोरप्रश्नप्रकरणे चोरावगमकवाक्यादिषु 'पञ्चमान्ता जातिभेदाभावादेव भवन्ति हि" इत्यादिषु तदीयपद्मनाभादिटीकासु "पञ्चमश्चाण्डालः" इति विवरणादिकमप्यत्र मानमिति गृह्णन्तु परे चण्डालत्वकामुका इत्यलमधिकेन ॥

## इति षष्ठं चण्डालास्पृश्यतानिवारणव्यवस्थावज्रम्

# सप्तमं देवालयचण्डालप्रवेशनव्यवस्थावज्रम्

७. पञ्चमादिपदव्यवह्रियमाणानां चण्डालानां विशुद्ध-शूद्रादीनामिव शिवविष्ण्वादिदेवालयेषु प्रवेशः शास्त्रानुमति-पूर्वकमनुमन्तुं शक्यते न वेति प्रश्नसमालोचने कथमपि नानुमन्तुं शक्यत इत्येव व्यवस्था । तथा हि—यदनुरोधेन यन्निर्माण-प्रतिष्ठादिकं जातं जायते च निखिलकर्मप्रवृत्तिस्तत्र तच्छास्त्रस्य मुख्यं प्रामाण्यमध्यवसतव्यम्, अन्यथा तद्विपरीतफलप्रसक्तिरिति प्रकृते देवतायतननिर्माणप्रतिष्ठादिकस्य निखिलभारतवर्षीयशिव-विष्ण्वादिदेवतासंबन्धिनस्तदीयकल्याणोत्सवादिनिखिलकर्मकलाप-स्य च नित्याराधानादिनिखिलकर्मप्रवृत्तेश्चागमशास्त्राधीनत्वात् आगमशास्त्राणां च मीमांसायां स्मृतितुल्यप्रामाण्यांगीकारेण चात्रागमशास्त्राणां मुख्यप्रामाण्यमवलम्बनीयम् । स्मृत्यादीनां तु तदुपोद्बलकत्वेनेति प्रथमतोऽत्रागमशास्त्रवचनानि दिङ्मा-त्रेणोदाह्रियन्ते । वैखानसागमे 'पञ्चमहापातकैश्चाण्डालाद्यैश्चालये प्रविष्टे तत्स्पृष्टनिवेदने च महाशान्तिं हुत्वा देवं कलशैः संस्नाप्य पुनः प्रतिष्ठां कारयेत्" इति, कारणागमे प्रायश्चित्त-काण्डे "रुद्रस्य वाथ विष्णोर्वा प्राकाराभ्यन्तरे यदि । रजस्वला-वधूश्चैव चण्डालश्च समागतः ॥ ततो ग्रामोत्सवे हस्तशताभ्यन्तरतो यदि । तद्देवस्य कला हीना राज्ञो मरणमेव च ॥ तद्ग्रामस्य क्षयः प्रोक्तः सस्यानां नाशनं ध्रुवम् ।' इति, कामिकागमे "म्लेच्छः पाषण्ड-कश्चैव वेदबाह्यश्च नास्तिकः । एतान्यपि च सर्वाणि मर्यादौ च

प्रदर्शयेत् ॥ अन्येषां चण्डालकादीनां महामर्यां प्रदर्शयेत् । वैश्यानामपि शूद्राणां भद्रमण्डपसेवनम् ॥ इतरेषां तु वर्णानां गोपुरं तु विधीयते । चण्डालपतितादीनां गोपुराद्बहिरेव हि ॥ (मर्या नाम बहिर्देशादन्तर्ध्वजबाह्यस्थानम्, महामर्या नामालयादायतं बहिस्स्थानमित्यागमनिर्णयः) इत्यादिभिरागमशास्त्रवचनैः । देवलेन वृद्धहारीतेन च "प्रासाददेवहर्म्याणां चाण्डालपतितादिषु । अन्तःप्रविष्टेषु तथा शुद्धिः स्यात्केन कर्मणा ॥ गोभिः संक्रमणं कृत्वा गोमूत्रेणैव लेपयेत् । पुण्याहं वाचयित्वा तु तत्तोयैर्दर्भसंयुतैः ॥ संप्रोक्ष्य सर्वतः पश्चाद्देवं समभिषेचयेत् । पञ्चामृतैः पञ्चगव्यैः स्नापयित्वाथ वैष्णवः ॥ प्रत्यृचं पावमान्यैश्च वैष्णवैश्चाभिषेचयेत् । अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तथा ॥ चतुर्भिर्वैष्णवैर्मन्त्रैः स्नाप्य पुष्पाञ्जलिं तथा । श्रीसूक्तेन तदा दिव्यैर्दद्यान्नीराजनां द्विजः ॥" इत्यादिभिर्वचनैः प्रायश्चित्तविधिरुक्ता । धर्मप्रवृत्तौ, "गर्भागाराद्बहिः स्थित्वा तथा प्राकारतोऽन्ततः । चण्डालदर्शनात्सद्यो देवो बिम्बात्पलायते ॥" इति आदित्यपुराणे "खण्डिते स्फुटिते दग्धे भ्रष्टे स्थानविवर्जिते । यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु ॥ अन्यमन्त्रार्चिते चैवमस्पृश्यस्पर्शदूषिते । दशस्वेतेषु नो चक्रुः संनिधानं दिवौकसः ॥" इत्यादिभिर्वचनैश्च चण्डालरजस्वलादीनामालयप्राकारान्तःप्रवेशे तत्स्पृष्टवस्तुनिवेदने च ग्रामोत्सवादिषु हस्तशताभ्यन्तरतस्तत्संनिधाने च तद्दैवतद्बिम्बत्यागकलाहानितद्देशराजमरणतद्ग्रामक्षयसस्यनाशनादिविप्लवपरम्परावाप्त्यादिकथनपूर्वकं तदालयसंप्रोक्षणपुनःप्रतिष्ठादिप्रायश्चित्तविधानेन म्लेच्छादीनां

प्राकारान्तःप्रवेशादिकथनेन च तद्भिन्नगर्भालयादिप्रवेशे च पुनःप्रतिष्ठादिविधानेन च चण्डालानामालयान्तः प्रवेशस्य सर्वशास्त्रनिषिद्धत्वात् । एवम् "चौरचाण्डालपतितश्वोदक्यास्पर्शने सति । शवाद्युपहते चैव प्रतिष्ठां पुनराचरेत् ॥", भृगुसंहितायाम् "चण्डालैरन्त्यजैश्चैव तथान्यप्रतिलोमजैः । म्लेच्छैश्च नीचचाण्डालैर्गुरुनिन्दादिदूषितैः ॥ एवमादिभिः संस्पृष्टे देवागारे विशेषतः । स्पृष्टे प्रवेशने बाधा पूजाकाले च दर्शने॥" इत्यादिभिस्सर्वत्र प्रतिषिद्धयोश्चण्डालप्रवेशस्पर्शनयोश्शास्त्रानुमतत्वं कथं नाम घटेतेति विभावनीयम् । अन्ततः श्रौतस्मार्तनिखिलगृहस्थधर्मसहाधिकारिण्या ब्राह्मण्या अपि 'ब्राह्मण्यपि हरं विष्णुं न स्पृशेच्छ्रेय इच्छती । सनाथा मृतनाथा वा तस्या नास्त्येव निष्कृतिः॥' इति कौर्मवचनानुरोधेन शिवविष्ण्वादिदेवतामूर्तिस्पर्शनेऽनाधिकार आम्नायते । यत्तु पतितपावनशीलस्य तच्छक्तिमतो दयासिन्धोः परमेश्वरस्य दर्शनस्पर्शननमनाराधनादिषु सर्वेषामपि पतितादीनां तत्समुद्धरणैकप्रयोजनत्वाद्देवायतननिर्माणस्य निर्बाधमधिकारोऽस्ति ; किं च तेषामेवाधिकार इत्यपि वाच्यः ; पण्डितानां हृद्देशस्थदेवाराधनेनैव कृतार्थतायास्सिद्धेरित्यादि दुर्युक्तिजालवदनं कलिभृत्यानां चण्डालकृपाप्रकाशने, तत्तुच्छम् । प्रभुसंनिधिगमनादौ विशुद्धवेषधारणस्य स्वैरेव क्रियमाणस्य निदर्शनत्वेन दर्शनेऽपि दृष्टिहीनानामेषां सर्वेश्वरसंनिधानगमनादौ पूतानामेवाधिकारो नापूतानां भवतीत्यादियौक्तिकोक्तिरप्युच्छृङ्खलानां सविधे व्यर्थैवेति नैतत्प्रत्युत्तरितव्यं भवेत् । किं तु शैवागमे "प्रति-

लोमान्त्यजादीनां स्तूपिं दृष्ट्वा समाचरेत् । दर्शनं गेहचूडाया दर्शनं गोपुरस्य च ॥ अन्त्यजानां तथान्त्यानां विज्ञेयं देवदर्शनम् ।" इति, प्रतिष्ठामयूखे "पादौ पादशिलास्तस्य जङ्घा पादोर्ध्वमुच्यते । गर्भश्चैवोदरं ज्ञेयं कटिश्च कटिमेखला ॥ स्तम्भाश्च बाहवो ज्ञेया घण्टा जिह्वा प्रकीर्तिता ।" इत्यादिवचनानुसारेण देवालयस्यैव देवस्वरूपत्वात् , तच्छिखरदर्शनस्यैव देवदर्शनत्वेनान्त्यजानामाम्नानाच्चास्तिकानां शास्त्रविश्वासिनां यथोक्तप्रवृत्त्यैव फललिप्सा भवेत् । नास्तिकानां तु विपरीतप्रवृत्त्या विपरीतफललाभ एव भवेदित्येवोत्तरितव्यं भवेदित्यलम् । एवं स्थिते वस्तुतत्त्वे म्लेच्छभाषाक्षराभ्यासिनो देवभाषागन्धरहिताः स्वधर्मवासनाशून्याः स्वैरचरिष्णवः स्वधर्मनिर्मूलनपराः केचिदार्यम्मन्याः स्वविग्रहाराधनमात्रतत्पराः श्रीभगवद्विग्रहाराधननिर्मूलनोद्यता देवालयेषु चण्डालप्रवेशनद्वारा श्रीभगवन्तमेव भारतवर्षात् प्रस्थापयितुं दुःशासनादिमुखेन प्रवृत्तास्तदाराधनायास्तिकैर्दत्तं स्थिरचरद्रव्यं चण्डालेभ्यो वशीकर्तुं यतमानाः स्वाशयसिद्धये शुष्कवेदान्तवाक्यैर्दुर्युक्तिजालं जल्पन्ति यदाराधनेन तस्मै कलये नमःसहस्रं समर्प्य प्राणपणेनापि देवालयरक्षणायास्तिकाः प्रयतेरन्निति विज्ञप्तिपूर्वकं विरम्यते ॥

## इति सप्तमं देवालयचण्डालप्रवेशनव्यवस्थावज्रम्

---

## अथाष्टमं विवाहविच्छेदव्यवस्थावज्रम्

८. दम्पत्योर्वैधविवाहसंस्कारप्रयोज्यः स्वस्वामिभावः परस्पररागाद्यभावमूलकपरस्परपरित्यागेन नश्यति लौकिकेन न वेति विचारे न कदापि नश्यतीत्येव व्यवस्था । तथाहि "पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम् । न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते ॥ एवं धर्मं विजानीमः प्राक्प्रजापतिनिर्मितम् । यस्मै दद्यात्पिता त्वेनां भ्राता वानुमते पितुः ॥ तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् । (संस्थितं मृतमित्यर्थः) मंगलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः ॥ प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् । नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ॥ पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ।" इत्यादिवचनैर्मन्त्रादिभिः सप्तपदीसंस्कारोत्पन्नपतिभार्यात्वयोः स्वस्वामिभावयोश्च नैयत्यप्रतिपादनेन त्यागमरणादिभिरनिवृत्तिचोदनेन च 'या पत्या वा परित्यक्ता विधवा स्वेच्छयापि वा । उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ मृते भर्तरि या नारी त्यक्तवत्यथ तं स्वयम् । सवर्णाज्जनयेद्गर्भं भर्तुः पौनर्भवं सुतम् ॥' इति मनुब्रह्मपुराणादिवचनैरन्योन्यत्यागेन स्त्रियाः परपुरुषपरिग्रहे तदुत्पन्नसुतस्य पौनर्भवत्वाम्नानेन तस्याः पुनर्भूत्वापत्त्या च वैवाहिकस्वत्वनाशे पूनर्भूत्वपौनर्भवत्वयोरापत्तेरसङ्गतत्वापत्त्या च 'तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः । तत्पितुश्चापि कर्तव्यं नामगोत्रादिपूर्वकम् ॥" इत्यादिना स्मृतिसारसंग्रहे नित्यतर्पणदानादिविधानासंगत्यापत्त्या च 'अपुत्रा शयनं भर्तुः पालयन्ती व्रते-

स्थिता । पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥ भार्यापिण्डं पतिर्दद्याद्भर्त्रे भार्या तथैव च श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः ॥ पुत्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः" इति वृद्धमनुशङ्खादिवचनैः निर्णयसिंधुधृतैः पुत्राभावे पत्न्या एव भर्तृश्राद्धाधिकाराम्नानेन च वैवाहिकस्वस्वामिभावस्य कदाचिदपि कथंचिदप्यनिवृत्तेः । तथाच स्वधर्मशास्त्रवासनारहितानां म्लेच्छादिमतान्तरव्यामोहेन तद्भावमभिकांक्षमाणानामधुनातनानां म्लेच्छदीनामिव दम्पत्योर्विवाहविच्छेदाय शासनकरणे यतमानानामुद्यमः कलिभूत्यानामनार्यतासंपादक एवेत्यलम् ॥

## इत्यष्टमं विवाहविच्छेदव्यवस्थावज्रम्

---

## अथ नवमं वर्णान्तरविवाहव्यवस्थावज्रम्

९. सार्ववर्णिकतया वर्णान्तरविवाहानां मन्वादिभिरुक्तत्वात् वर्णान्तरविवाहा अधुना कुतो नानुष्ठेया ? अनुष्ठितेषु कतिपयेषु शिष्टाः कुतो वा गर्हन्ति तान् ? अत्र शास्त्रानुमतिरस्ति वा न वेति विचारे नानुष्ठेयता कलावित्येव व्यवस्था । यद्यपि "सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि । कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः । शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते । ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥" इति वचनैर्मनुना कामतस्तुप्रवृत्ताना-

मित्यनेन भोगार्थमनुलोमस्त्रीणां विवाहोऽभ्यनुज्ञातः ; तथापि तदनन्तरश्लोकैरेव "न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः । कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥ हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः । कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥" इत्यादिभिः शूद्राविवाहस्य द्विजानां हेयत्वमेव समुपन्यस्तं कुलभ्रंशकत्वेनेति तदतिरिक्तवर्णान्तरविवाहस्य भोगार्थत्वेन धर्म्यत्वमापततीत्युक्तिरपि शास्त्रापरिज्ञानमूलिका । 'द्विजानामसवर्णासु कन्यासूपयमस्तथा' इत्यादिभिः कलिवर्ज्येषु वृद्धपराशरादिभिरसवर्णाविवाहस्य निषिद्धत्वान्न भोगार्थोऽपि वर्णान्तरविवाहो धर्म्यः किं तु कुलभ्रंशक एवेत्यलम् ॥

इति नवमं वर्णान्तरविवाहव्यवस्थावज्रम्

---

## अथ दशमं म्लेच्छमतप्रविष्टार्यमतपुनःप्रवेशव्यवस्थावज्रम्

१०. आर्यमतविरुद्धम्लेच्छजातीयकैस्तवमहम्मदीयादिमतवेषभाषाचारसिद्धान्तव्यामोहेन सुखसाधनबुद्ध्या स्वमतन्यक्कारसर्वस्वधर्मत्यागपूर्वकमनार्यम्लेच्छमतस्वीकारम्लेच्छमताचारादीनखिलाननुतिष्ठतां म्लेच्छसहभोजनम्लेच्छस्त्रीसंगादिविविधसंसर्ग-

दुष्टानामार्यजातिभ्रष्टानां पश्चात्तापादिवशेन पुनरार्यजातिमतधर्मानुष्ठानादिलिप्सायां तत्प्राप्त्यधिकारप्रापककर्मविशेषाः शास्त्रानुगृहीताः सन्ति न वा ? सन्ति चेत्के ते ? इति प्रश्नसमालोचने तादृशानामार्यत्वप्रापकाः कर्मविशेषा न केऽपि सन्ति शास्त्रीयाः, किं तु म्लेच्छत्वमेव शरणं तेषामित्येवात्र व्यवस्था ॥

अत्र च विषये श्रीकाशीमहाब्राह्मणसंमेलनविद्वत्परिषदि बहुतरविचारेण श्रीश्रीश्रीधर्माचार्यचरणैर्मध्यस्थैश्च महामहाविद्वद्भिः विरचिता व्यवस्थाः सन्त्येव । यथा अष्टाचत्वारिंशद्वारमकामत एकामत्रभोजनादिरूपगुरुतरसंसर्गे कृतेऽपि प्रायश्चित्तेन व्यवहार्यता । कामतस्तूक्तविषये चतुर्विंशतिवाराभ्यासे तथात्वम् । एकपङ्क्त्युपविष्टभोजनादिरूपलघुभोजनसंसर्गादि कामतो वत्सरेण कामतस्तु वत्सरार्धेनाव्यवहार्यता । तत्स्त्रीगमने त्वकामतो वारद्वयाभ्यासेन कामतस्तु सकृदेव कृतेऽव्यवहार्यतेति । ततो बलात्कारितम्लेच्छदास्यादिस्थले त्वित्यादिना बलात्कारविषयिण्यो व्यवस्थाः कृताः । वैशिष्ट्येन बलात्कारितस्थले तत्तद्विशेषव्यवस्थापूर्वकमाचतुर्वर्षं प्रायश्चित्तीयता । ततः परं तु प्रायश्चित्तीयतैव निरस्ता । 'गृहीतो यो बलात्' इत्यादिभिर्यावद्विंशतिवर्षप्रायश्चित्तीयता तु देवलोक्ता 'म्लेच्छैस्सहोषितः' इत्याद्युपक्रमबलेन सहवासमात्रपरमित्यादि व्यवस्थापितम् । सनातनधर्मप्रदीपे च यावद्वर्षचतुष्टयमेव च स्वधर्मानुष्ठानयोग्यतामात्रादितत्तद्विशेषपूर्विका व्यवस्थाः कृताः । परिशीलितं च देवलस्मृतेः प्रामाण्यंते-

र्या चात्र मुख्यं शरणं व्यवस्थासु । निर्धारितं च शूलपाण्यादिव्यव-स्थानुसारेण वचनान्तरसंवादेनैव च तस्याः प्रामाण्यमपि । एवमेता एव व्यवस्था द्वीपान्तरवासप्रतिनिवृत्तविषयेऽपि श्रीधर्माचार्यैरनु-गृहीताः । परं तु सर्वाश्चेमा व्यवस्था न प्रकृतप्रश्नविषयाः । विविधम्लेच्छसंसर्गवशेन कामतो दुद्दाष्टकृतेन स्वमतस्वधर्मसर्वस्व-त्यागपूर्वकं म्लेच्छमतेषु प्रविशय स्त्रियश्च तेषां तदीयोद्वा-हादिपूर्वकमुपभुज्य नित्यशस्तदीयविविधाभक्ष्यभक्षणापेयपानादिभिः संवत्सरन्यूनकाल एव तद्भावमापन्नानामथवा स्वजातिभ्रष्टानां तत्सारूप्यादिपञ्चविधमुक्तिभाजां शुद्धिसंस्कारव्याजेन कलिमूर्यैर्हि-न्दुसंख्याधिक्यमात्रसंपादनकामुकैरुद्घाट्य प्रवर्तिते प्रवर्त्यमाने चार्यधर्मानुतिष्ठासामात्ररहितार्यमतपुनःप्रवेशे निर्दिष्टप्रायश्चित-व्यवस्थानां निर्विषयत्वात् । तासां तात्कालिकमोहबलात्कारा-दिभिर्म्लेच्छसंसर्गे प्रवृत्तानां हृदयपूर्वकस्वीयगुरुतरपश्चात्ताप-तप्तानां जनानां प्राप्ते प्रायश्चित्तविधाने तदीयसंसर्गाविशेषादिपा-पतारतम्येन तद्विधानमात्रौपयिकत्वेन तत्कथामात्रस्यापि प्रकृते, प्रसक्त्यभावाच्च । परं त्वियानवांशोऽत्र विचारणीयो दृश्यते देवल-स्मृतेः प्रामाण्याप्रामाण्यविषयिणी चर्चा किमर्थं प्रवृत्ता वचना-न्तरसंवादेन शूलपाण्यादिव्यवस्थानुरोधेन च तस्याः प्रामाण्यमि-ति व्यवस्था चेति तत्र बलाद्दीक्षाकरणबलान्नयनादिषु व्यवस्था-पकानां देवलवचनानामन्यत्र निबन्धेषु दृष्टत्वात्—'अपेयं येन संपीतमभक्ष्यं वापि भक्षितम् । म्लेच्छैर्नीतेन विप्रेणअगम्यागम-नं कृतम् ॥ तस्य शुद्धिं प्रवक्ष्यामि यावदेकं तु वत्सरम् । चान्द्रायणं

तु विप्रस्य सपराकं प्रकीर्तितम् ॥'' इत्यादि । 'बलाद्दासीकृता ये तु' इत्येतद्वचनपर्यन्तमारम्भ एव दृश्यमानानामानन्दाश्रम-मुद्रितायामान्ध्राक्षरमुद्रितायां च देवलस्मृतौ वचनानां तुरुष्की-गमनादिप्रायश्चित्तप्रकरणेषु हेमाद्यनुद्धाटितत्वेन विभिन्नविभिन्न-प्रायश्चित्तविधायकमन्वादिवचनैकवाक्यताराहित्येन च व्यामोह-नादिभिरबलान्नयने प्रायश्चित्तविशेषप्रतिपादकानां प्रामाण्या-प्रामाण्यविशये न तैरेव हेतुभिः प्रामाण्यं च तत्र व्यवस्थाप्य हृदये तच्चर्चातद्व्यवस्थे कृते इति वक्तव्यम् । अत एव चैतानि वचनान्यनुद्धाट्यैव ग्रन्थान्तरवचनान्तरानुरोधेन च तथा व्यवस्था विभिन्नाः कृता इति च । परं तु समबलयोः स्मृत्यो रन्यतरस्या इतरापक्षेया प्रायश्चित्तभेदनिरूपणमात्रेण तथा समुपलभ्यमाननिबन्ध-नानुपलंभमात्रेण चाप्रामाण्यकल्पनं न्याय्यं न वेति विशेते हृदयम् । मुद्रितदेवलस्मृतिग्रन्थेष्वनुपलभ्यमानानां हेमाद्र्यादिधृतानां 'चण्डा-लश्च तुरुष्कश्च द्वावेतौ तुल्यपापिनौ । तदङ्गना तथा ज्ञेया विप्रैः पापभयातुरैः ॥' इत्यादीनां बहूनां वचनानां देवलीयानामुपलम्भेन विभिन्नपठितानां च बहूनामुपलंभेन च देवलस्मृतेस्त्रुटितत्वे संशयाभावेऽपि समुपलभ्यमानानां प्रामाण्येन परिग्रहे प्रतिबन्धा-भावेन निबन्धनग्रन्थाधृतत्वमात्रेण समुपलभ्यमानवचनानामप्रा-माण्यवचनस्यान्याय्यत्वात् । पुष्पिणीपरिणयादिग्रन्थान्तरानुपलभ्य-मानपरित्यागादिविधायकवचनानां हेमाद्रिमात्रधृतानामप्रामाण्य-कल्पनस्याभाववत् यत्र क्वचन ग्रन्थे समुपलभ्यमानानामेव स्मृति-घटकवचनानां प्रामाण्यपरिग्रहे शरणीकृत एवैषामप्रमितत्वेन

वैदिकाभरणजगद्वल्लभादीनां निबन्धनग्रन्थानाममुद्रितानां चाद्यावधि तत्र तत्र समुपलभ्यमानत्वेन तत्रापि विनिगमकाभावेन च पुष्पिणीपरिणयव्यवस्थोक्तादिशा रिपुंजयोक्तसार्ववर्णिकचान्द्रायणव्रतप्रायश्चित्तस्य निर्णयसिन्ध्वाद्युक्ताश्वलायनादिविहितप्रायश्चित्तस्य चैकस्मिन्नेव क्षत्रियादिपुष्पिणीपरिणये भेदेऽपि तयोरुभयोरपि प्रायश्चित्तयोः प्रमितत्ववच्च तथा बहुत्र प्रायश्चित्तांशे भेदस्य दृश्यमानतया च प्रकृतम्लेच्छकृताबलान्नयनप्रायश्चित्तविधायकानां देवलवचनानां प्रमितत्वे परिगृहीते च सति तदुक्तापेयपानाभक्ष्यभक्षणागम्यागमनानां सकृत्त्वासकृत्त्वादिभेदानां तत्रानुक्ततया सकृदसकृत्कृतानामपि तेषां तद्विहितसपराकचान्द्रायणादिप्रायश्चित्तापनोद्यदोषत्वं प्राप्नोति। 'तुरुष्कीं यो द्विजो गच्छेत् पञ्चबाणातुरः सकृत्। अज्ञानाज्ज्ञानतो वापि पूर्ववच्छुद्धिरीरिता ॥' इत्यादिमार्कण्डेयादिवचनान्तरैकवाक्यतायां हेमाद्र्याद्युक्तदिशा श्रीकाशीस्थनिरुक्तदिशैव व्यवस्थाः प्राप्नुवन्तीति। न च सकृत्त्वासकृत्त्वादीनामत्र वचनान्तरसापेक्षत्वेन तदेकवाक्यतया तत्सिद्धिरिति वाच्यम्। विभिन्नविधेयस्थले तथा कल्पनस्यान्याय्यत्वादिति युक्तदर्शनभारोऽत्र विशयापनोदनभारश्च विदुषामुपर्यैव निक्षिप्यत इत्यलं पूज्यव्यवस्थाविमर्शापराधेन। अत्र चण्डालीगमने यादृशं प्रायश्चित्तं तादृशमेव तुरुष्कीगमनेऽपीत्यातिदिदिशुः। तत्रापि प्रायश्चित्तभेदा आम्नाताः पराशरादिभिरित्यन्यदेतत्। तथा च विविधम्लेच्छसंसर्गभ्रष्टजातीनामार्याणाम्

आर्यत्वप्रापकाः कर्मविशेषा न कुत्रापि शास्त्रानुगृहीताः सिध्यन्तीति सिद्धमित्यलमधिकेन ॥

इति दशमं म्लेच्छमतप्रविष्टार्यमतपुनःप्रवेशा-
व्यवस्थावज्रम्

---

## अथैकादशं जातिव्यवस्थावज्रम्

११. जन्मकृता वा जातिरुत गुणकर्मकृता तत्तद्धर्मानुष्ठानप्रयोजिका लोकव्यवहारप्रयोजिका चाथवोभयकृता वेति प्रश्नसमालोचने जन्मसिद्धैव जातिर्नैसर्गिकीति तत्तद्धर्मानुष्ठानप्रयोजिका लोकव्यवहारप्रयोजिका चातिदेशिकी गुणकर्मकृता तु प्रायेण शास्त्रीयनिषेधप्रवर्तनप्रयोजिका भवतीत्येव व्यवस्था ॥ तथाहि— जातिशब्दार्थपर्यालोचने जनीप्रादुर्भाव इत्यतः कर्मणि क्तिनि जननेन प्राप्यत इति जातिः इति व्युत्पत्त्या प्रादुर्भावप्राप्या जातिरित्यर्थस्य सिद्धत्वाद्धटादिषु घटत्वादेर्घटादिप्रादुर्भावप्राप्यत्वात् प्रादुर्भावप्राप्यत्वमेव जातिलक्षणं सिध्यति । तथा च महाभाष्ये 'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असर्वलिंगां बह्वर्थां तां जातिं कवयो विदुः ॥' इति जातिलक्षणं निरूपितं जातेरस्त्रीति सूत्रे । द्रव्यस्य प्रादुर्भावविनाशाभ्यां या प्रादुर्भावविनाशौ प्राप्नोति या च गुणैः सह संबध्यते या च सर्वाणि लिङ्गानि न

भजते या च नानावस्त्वनुगता तां जातिमिति विपश्चितो विदुरित्यर्थः। एवं च प्रादुर्भावप्राप्यत्वमतिरोहितं जातेः। अत्र कलिभृत्याः—विशिष्टगुणकर्मणोरेव तत्तज्जातिप्रयोजकत्वं वक्तव्यम्; न तु विशिष्टजन्मनः। अत एव गीतायां 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति गुणकर्मविभागेन चातुर्वर्ण्यसृष्टिकथनं संगच्छते। अत एव च विश्वामित्रादीनां जन्मतः क्षत्रियत्वेऽपि गुणकर्मवशात्तेषां ब्राह्मणत्वप्राप्तिमुपवर्णयन्त्युपाख्यानानि च संगच्छन्ते, इत्यादिकं वदन्ति। अत्रैवं वदन् वादी प्रष्टव्यः—किं जन्मान्तरीयगुणकर्मविभागेन चातुर्वर्ण्यसृष्टिरुक्तेत्यभिप्रेयत उतैतज्जन्मगततद्विभागेन? अत्र प्रथम ओमिति ब्रूमः। जन्मान्तरीयगुणकर्मविभागेन तत्तन्मिथुनापादानकसृष्टेरंगीकृतत्वेन भवता प्राथमिकसृष्टेरप्येतत्कल्पीयायाः कल्पान्तरीयतत्तज्जीवगतगुणकर्मविभागप्रयोज्यत्वस्यांगीकृतप्रायत्वात् तत्तज्जन्मावाप्तौ तत्तद्गुणकर्मवासनयोः प्रयोजकत्वस्येष्टत्वात् तज्जन्मप्रयुक्तजातेरंगीकारस्यावाप्तेः। द्वितीये तु गर्भस्थे जातमात्रे वा शिशौ कीदृशं गुणकर्मसमवायं दृष्ट्वा तत्र जातिं व्यवस्थाप्य तत्तज्जातीयाः पुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनादयः संस्काराः प्रवर्तयितव्याः प्रवर्तन्ते चाधुनायुष्मान्निति। न हि गर्भवासदशायां शैशवदशायां वा सत्त्वादिगुणपरीक्षा शमादिकर्मरीक्षा वा शक्यते कर्तुम्। तदानीं तदसंभवात्। संस्कारककर्मविधायकवाक्यैस्तादृगान्तरंगिकतत्परीक्षाप्रकारस्य कुत्राप्यबोधनाच्च। वर्तमानगुणकर्मसमवायस्यैव जातिप्रयोजकत्वांगीकारेण भाविगुणकर्मसम-

चायस्य तत्त्वांगीकारे प्रयोजनाभावात्तावत्पर्यन्तमसंस्कारापत्तेश्च । अतोऽवश्यं भवता तादात्विकैतद्भवीयविशिष्टगुणकर्मणोरिव प्राग्भवीयविशिष्टगुणकर्मणोरपि जातिप्रयोजकत्वमकामेनाप्यभ्युपगन्तव्यं स्यादित्यवेहि । किं च भवदुक्तदिशा सृष्टिप्रवृत्तौ तत्तज्जात्यवच्छिन्नतत्तद्व्यक्तिसृष्टेः प्रागेव तत्तद्गुणकर्मसृष्टिर्वक्तव्या । सा च विप्रतिषिद्धा । गुणकर्मणोराधेयत्वेनाधारमन्तरा तयोः स्थित्यसंभवात् । अतो व्यक्तिसृष्ट्यनन्तरमनया व्यक्त्या चैतद्गुणकयैतत्कार्मिकया च भाव्यमित्युद्दिश्य तत्तद्व्यक्तीः सृष्ट्वा तत्तद्गुणाः तत्तत्कर्माणि च तासां मयैव विहितानीत्यर्थस्यैव प्राप्तेर्विपरीतवासनामूलकमज्ञानविलसितमिदमायुष्मत इत्येवात्र प्रत्युत्तरितव्यं भवति । इदमेव बालकेन विश्वामित्रादीनां जन्मतः क्षात्रियत्वेऽपीत्यादिना स्ववचनव्याहतेन वाक्येन प्रपंचितं भवता। जन्मप्रयुक्तजात्यभावे क्षत्रियत्वं कथं प्रत्यक्षं भवतः । किं च विश्वामित्रस्य बाह्मण्यं मातृकर्तृकब्रह्मौदनाशनाद्धेतोर्जन्मप्रयुक्तमेव न तपसाप्तमिति महाभारतानुशासनपर्वणि 'न ब्राह्मण्यं क्षत्रियाद्यैस्तपःकोट्यापि लभ्यते । विश्वामित्रस्य ब्राह्मण्यं मात्रा ब्रह्मौदनाशनात् ॥" इति चतुर्थाध्यायस्थेन वचनेन स्पष्टीकृतम् । अत एव चात्रिसंहितायाम् 'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ॥' शातातपसंहितायां 'जन्मनैव महाभाग ब्राह्मणो नाम जायते ।' मनुस्मृतौ 'सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते ॥ सवर्णेभ्यस्सवर्णासु जायन्ते वै सजातयः॥"

कौशिकसंहितायाम् 'न हि जातिपरा वृत्तिश्चिह्नमात्रपरिग्रहात् । न नापितो ब्राह्मणत्वं याति सूत्रादिसंग्रहात् ॥ कलौ ब्राह्मणता वीर्यात्तपश्चर्यादिना न हि । शुद्धं त्वशुद्धतामेत्य शोधनाच्छुध्यते पुनः ॥ यच्च स्वभावतोऽशुद्धं तन्न शुध्यति शोधनात् ।' इत्यादीनि परश्शतानि वचनानि जन्मनैव जातिव्यवस्थापकानि संगच्छन्ते । अत एव ब्रह्मक्षत्रवैश्यानां द्विजातित्वसिद्धिः । किं बहुना । 'अथ य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्यन्ते श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इत्यादिच्छान्दोग्यश्रुत्यादय एव कण्ठत एव पुण्यपापकर्मभिस्तत्तत्संकेतविशिष्टजन्मप्राप्तिबोधनेन जन्मत एव जातिं वदन्ति । अत एव चानुलोमप्रतिलोमसंकीर्णजातिव्यवस्थापिमनुकृता घटते । लोके च जन्मत एव राजकीयजन्मपत्रलेखादिष्वपि तत्तत्संकेतैरेव व्यवह्रियत आबालगोपम् । दुर्ब्राह्मणब्राह्मणब्रुवब्रह्मचण्डालादिषु कर्मप्राप्तप्रकृष्टदोषसामानाधिकरण्येऽपि जन्मप्रयुक्तब्राह्मणत्वादिपराहतिस्तत्तत्संकेतेषु नोपवर्ण्यते न विसृज्यते च । एतेन गुणकर्मवशादपि जन्मप्रयुक्तजातिसामानाधिकरण्येन जात्यन्तरावाप्तिर्व्याख्याता । गुणकर्मवशाज्जात्यनवाप्तिर्नास्माभिः प्रतिज्ञायते । किं तु जन्मप्रयुक्तजातेर्नान्तरीयकत्वमित्येव । परं तूत्कृष्टजातिसंपादनस्य 'तपोबीजप्रभावैस्तु' इत्यादिना तपोविशेषमात्रसाध्यत्वात्कृच्छ्रलभ्यत्वम् । निकृष्टजातिसंपादनस्य त्वतिसुकरत्वं चेत्यावेद्यते ।

एतेन च 'न जातिः पूज्यते राजन् गुणाः कल्याणदायकाः । चण्डालमपि सद्वृत्तं तं देवा ब्राह्मणं विदुः ॥ शूद्रे चैव भवेल्लक्ष्म द्विजे तच्च न दृश्यते । न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥" इत्यादीन्येवंजातीयकानि गुणकर्मज्ञानप्रशंसापराणि न तत्तज्जातीयकर्मानुष्ठानप्रयोजकानि लोकव्यवहारप्रयोजकानि वा भवन्तीत्यपि दर्शितम् । तेष्वेव वचनेषु तत्तज्जातीयसंकेतापरित्यागेनैव तत्तन्निर्देशादित्यलमधिकेन ॥

## इत्येकादशं जातिव्यवस्थावज्रम्

---

## अथ द्वादशमेकयामविवाहोपनयनव्यवस्थावज्रम्

१२. अधुना ब्राह्मणेष्वपि प्राचुर्येण प्रवर्त्यमानानामेकयाममात्रकालनिर्वर्त्यमानयावत्कर्मकलापानां विवाहोपनयनानां सांगसंस्कारसंयुतत्वेन विधत्व सिद्ध्याशास्त्रनिर्दिष्टफलप्रापकत्वं सिध्यति न वेति प्रश्नविचारे सांगसंस्कारासिद्ध्यभावेन वैधत्वासिद्ध्या निर्दिष्टफलप्रापकत्वमेकयामविवाहोपनयनानां न सिध्यतीत्येव व्यवस्था । तथा हि—संस्कारपदार्थस्यात्मशरीरान्यतरस्थायिविहितक्रियाजन्यातिशयविशेषरूपत्वेन वीरमित्रोदयादिषु परिष्कृतत्वेन तेषु च विवाहोपनयनयोराश्रमप्रापकत्वेन द्विजातीयतत्तन्निखिलधर्मानुष्ठानाधिकारप्रापकत्वेन च यथावदनुष्ठितयोरेव तयोस्तादृशा-

धिकारप्रापणक्षमत्वात् द्विजातीयधर्माणां प्रायेण सर्वेषामपि अग्निहोत्राधारकत्वेन तल्लोपे तल्लोपप्राप्त्या तयोस्तदंगानां वाप्यविधिना कृतानामिवाकालकृतानामप्यकृतत्वात् प्रकृते च विवाहोपनयनयोः संस्कारयोर्मुख्ययोर्मुख्यांगभूतौपासनारंभस्यैव लोपात् तस्य चारंभस्य 'सायमेवाग्निपूजेत्येके' 'प्रक्रमो नित्यहोमस्य स्थालीपाकादनन्तरम्। सायमेवेत्यनुब्रूयुः मुनयस्तत्त्वदर्शिनः ॥' इत्याद्यापस्तंबादिवाक्यैः सायंकाल एव विहितत्वेनोभयोरपि प्रातरुपनयने विवाहे च प्राप्तेरेवाभावादारब्धपरित्यक्तस्यौपासनस्य पुनरारंभावश्यकतायां विच्छिन्नहोमादिप्रायश्चित्तानां विहितत्वेऽपि विहितकालानारब्धौपासनारम्भाय कुत्रापि प्रायश्चित्तानामविहिततया यावज्जीवमौपासनाग्निलोपरूपश्वित्रतुल्यदोषदुष्टत्वमेकम्। तस्य चौपासनाग्नेः "नित्यो धार्यः त्र्यहमेतमग्निं धारयन्ति" इत्यादिसूत्रैः गृहस्थस्य ब्रह्मचारिणश्च नित्यत्वेनाम्नातस्य लोपात्तदाधारककर्मलोपरूपाद्द्वितीयदोषदुष्टत्वम्। एवमत्रैव दिवसत्रयाग्निधारणस्य वटोर्विहितस्य लोपवत् 'क्षारलवणवर्जनं च' इत्यादिविहितत्रिरात्रब्रह्मचर्यदीक्षालोपेन चतुर्थदिवसकर्तव्यदीक्षावस्त्रविसर्जनपालाशहोमकर्मादिलोपरूपदोषदुष्टत्वमुपनयने। तथा विवाहे प्रातःकालिके 'उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य उत्तराभ्यां यथालिंगं ध्रुवमरुन्धतीं च दर्शयति, अथैनामाग्नेयेन स्थालीपाकेन याजयति' इत्याद्यापस्तंबोक्तारुन्धतीदर्शनस्थालीपाकादीनां 'त्रिरात्रमुभयोरधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च। तयोः शय्यामन्तरेण दण्डो गन्धलिप्तो वाससासूत्रेण वा

परिवीतस्तिष्ठति' इत्यादिविहितनित्यब्रह्मचर्यगन्धर्वस्थापनादीनां प्रधानांगभूतानां तथा 'तं चतुर्थ्यांपररात्र उत्थाप्य' इत्यादिसूत्रविहितगन्धर्वोत्थापनादिशेषहोमान्तकर्मकलापस्य चतुर्थदिवसापररात्रकर्तव्यस्य मुख्यांगस्य लोप इत्यादिबहुदोषदुष्टत्वामिति ईदृशमुख्यांगकर्मकलोपरूपमहादोषदुष्टयोरेकयामोपनयनविवाहयोः सांगसंस्कारयुतत्वेन वैधत्वासिद्धिः कथं नु घटत इति विभावनीयं विद्वद्भिः। 'वाग्दानं च प्रदानं च वरणं पाणिपीडनम्। सप्तपदीति पंचांगो मुनिभिः परिकीर्तितः॥' इति धर्मप्रवृत्तिधृतवचनेन वाग्दानप्रदानादीनां पूर्वांगत्वेन प्रधानहोमादिसप्तपद्यन्तसंस्कारस्यैव विवाहपदार्थत्वेन वीरमित्रोदयादिष्वाम्नानात् दर्शितापस्तंबप्रयोगसूत्ररीत्याग्निप्रदक्षिणादिशेषहोमान्तस्य कर्मकलापस्योत्तरांगत्वेनाम्नानाच्च प्रकृतैकयामविवाहेषु पूर्वांगविशिष्टसप्तपद्यन्तसंस्कारस्य निष्पत्त्या वैधत्वस्य सिद्धावपि निरुक्तरीत्यारुन्धतीदर्शनान्तविवाहस्थालीपाकान्तो विवाहः शेषहोमान्तो विवाह इत्यादिप्रयोगकृदुद्घोषणानुसारेण सांगसंस्कारसंपत्तिप्रयोजकोत्तरांगकर्मकलापमध्ये केषांचिन्मन्त्रजपमात्रनिष्पत्तावपि अकालकृतत्वेन तेषामप्यकृतत्वात् अरुन्धतीदर्शनादीनां स्वरूपलोपेन चोत्तरांग लोपादवैधत्वस्य च प्राप्त्यार्धजरतीयन्यायेन वैधावैधविवाहत्वमेव सिध्यतीति वक्तयम्। 'अग्निर्देवो द्विजातीनाम्' इत्यादिनाग्निदेवकानां द्विजानां स्मार्ताग्निहोत्रारंभस्यापि समुच्छदे द्विजत्वप्रापकोपनयनस्य निखिलश्रौतस्मार्तकर्मकलापानुष्ठानाधिकारप्रापकविवाहस्य च सिद्धिः कथं भवेदेषु कल्युपनयनकालिविवाहेषु। यद्यपि

योक्त्रविमोचनान्तवैवाहिककर्मानुष्ठानानन्तरं वैवाहिकाग्निना सह वरगृहे प्रवेशहोमार्थं 'प्रवावाहयेत्प्रवाहारयेत्' इत्यादिसूत्रैः कन्यादातृगृहान्निष्क्रम्य वरगृहं प्रति वधूं नीत्वा प्रवेशहोमादिशेषहोमान्तकर्मकलापस्य वरगृह एवानुष्ठाने विधीयमाने रथाद्यारोहणादियावद्वरगृहप्रवेशं मध्येमार्गमनेकमन्त्रजपादिकं महता सूत्रसन्दर्भेणापस्तंबादिभिर्विधीयते। एवं वधूवरयोर्मध्ये गन्धर्वं संस्थाप्य त्रिरात्रमतिकठिनाष्टांगमैथुनवर्ज्यत्वरूपब्रह्मचर्यानुष्ठानपूर्वकमधश्शय्यायां सहशयनं विधीयते यावज्जीवमन्योन्याविच्छिन्नानुरागादिफलावाप्तये। तथापि तदेतत्सर्वं कारिकावृत्तिकृन्नृसिंहभट्टाचार्यकालात्प्रागेव लौकिकानुसंधानेन वा रजोगुणाधिक्येन वा केनापि वा कारणेन विलुप्य कन्यादातृगृह एव प्रधानांगलोपमात्राभावपूर्वकं यथाकथंचिन्निर्वर्त्यतेऽद्यावधि वैवाहिकी क्रिया। अधुना तु कलिविवाहक्रमणेन तदेतत्सर्वं स्वप्नायमानं स्वरूपलोप एव पर्यवस्यतीत्यहो कलिमहिमाविजृम्भणं कर्मभूमावधुनेति च खिद्यते चेतः। "औपासनपरित्यागी सुरापीत्युच्यते बुधैः" इत्यादिभिरार्यैर्महर्षिभिः जोघुष्यते। 'अनिन्दितैस्त्रीविवाहैरनिन्द्या भवति प्रजा। निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत्''॥ इत्यादि च। तस्मादीदृशकलिविवाहैः पतिभार्यात्वसिद्धावपि धर्मपत्नीत्वादिसिद्धिर्न भवति इत्येव वक्तव्यं स्यादित्यलमधिकेन॥

इति द्वादशमेकयामोपनयनविवाहव्यवस्थावज्रम्

# अथ त्रयोदशं स्त्रीस्वातन्त्र्यदायाधिकारव्यवस्थावज्रम्

१३. आर्यजातीयकुलस्त्रीणां पुरुषाणामिव राजसेवा-देशाटनधनार्जनादिषु बाह्येषु निखिलेषु लौकिकव्यापारेषु स्वातन्त्र्यं शास्त्रकृद्भिरनुगृहीतं न वा ? तथा स्थिरचरद्रव्येषु सर्वेष्वपि पुत्रादिपुरुषसाम्येन दायाधिकारः शास्त्रविहितोऽस्ति न वा ? इति प्रश्नविचारे न कुत्रापि कर्मसु कुलस्त्रीणां स्वातन्त्र्यमुपनिबद्धं शास्त्रकृद्भिरित्येव व्यवस्थात्र प्रथमांशे । तथा हि 'मनुस्मृतौ पञ्चमाध्याये स्त्रीधर्मप्रकरणे "बालया वा युवत्या वा वृद्धया वापि योषिता । न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥ बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने । पुत्राणां भर्तरि प्रेते न भजेत्स्त्री स्वतन्त्रताम् ॥ पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः । एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले ॥ सदा प्रहृष्टया भाव्यं गृहे कार्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥" इत्यादिभिर्वचनैर्गृहेष्वपि स्वातन्त्र्याभावं विहितातिरिक्तेषु प्रतिपाद्य पितृभर्तृसुतान्यतमवशस्थानस्य तथात्वस्थाने पितृभर्तृकुलद्वयगर्ह्यत्वापादकत्वस्य च समुद्बोधनपूर्वकं गार्ह्यकर्मविधानसामर्थ्यनिरन्तरसंतुष्टान्तरङ्गत्वगार्ह्यकर्मौपयिकद्रव्यशुद्ध्यादिविधानातिव्ययराहित्यादिगुणसंयुतत्वादिविधानेन 'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥' इत्यादिभिः पतिशुश्रूषामात्रेण स्वर्गवासस्य च स्त्रीणां बोधनेन पुनर्नवमाध्यायेऽपि 'अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः

स्वैर्दिवानिशम्' इत्यादिभिरस्वातन्त्र्यकरणमेव विधाय 'सूक्ष्मेभ्योऽपि प्रसंगेभ्यः स्त्रियो रक्ष्या विशेषतः । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥' इत्यादिभिः स्त्री[illegible]न्थसन्दर्भेण विधाय पुंसामप्रमत्ततया विधेयाः स्वा प्रसूतिमित्यादिना रक्षणेनैव स्त्रीणां स्वसन्तानस्वीयशिष्टाचारस्ववंशस्वस्वधर्मरक्षणादिबोधनेन 'यादृशं भजते हि स्त्री सुतं सूते तथाविधम् । तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः ॥' इत्यादिना सन्तानशुद्ध्यर्थत्वेनैव प्राधान्येन स्त्रीरक्षणं बोधयित्वा बलात्कारेण तद्रक्षणस्य कस्याप्यशक्यत्वं 'न कश्चिद्योषितः' इत्यादिना प्रतिपाद्य तद्रक्षणोपायत्वेन धनरक्षणधनव्ययद्रव्यशरीरशुद्ध्यात्मशुश्रूषादिधर्मान्नपक्तिगृहोपकरणरक्षणादौ नियोजनं विधाय पानदुर्जनसंसर्गपतिविरहस्वेच्छाटननिद्रान्यगेहवासानां स्त्रीसंदूषकत्वेन ततो निवर्तनं संबोध्य प्रयत्नपूर्वकरक्षणेनापि स्वाभाविकपुंश्चलत्वचलचितत्वस्नेहाभावहेतुकभर्तृविषयकविकारोत्पत्तेः 'पौंश्चल्याच्चलचित्ता च' इत्यादिना प्रतिपादनेन शय्यासनालंकारकामक्रोधानार्जवद्रोहाभावकुचर्याणां तासु मनुना कल्पितत्वेन तत्स्वभावपरिज्ञानपूर्वकतद्रक्षणगुरुतरयत्नवत्त्वविधानेन च 'यन्मे माता प्रलुलुभे' इत्यादिश्रुतिनिदर्शनपूर्वकं स्त्रीणां व्यभिचारशीलवत्त्वस्य नैसर्गिकत्वमाम्नाय यादृग्गुणेनेत्यादिना भर्तृगुणानुरूपप्रवृत्तिमभिधायाहर्निशमप्रमत्तेन भूत्वा तद्रक्षणं कर्तव्यमिति बोधनेन स्त्रीस्वातन्त्र्यस्य सर्वथा निषिद्धत्वात् । 'प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः । स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति

कश्चन ॥' तृतीयाध्याये 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम्। न शोचन्ति तु यत्रैता वर्धते तद्धि सर्वदा ॥ जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः। तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥ तस्मादेतास्सदा पूज्या भूषणाच्छादनाशनैः ॥" इत्यादिभिः, 'प्रजनार्थं स्त्रियः सृष्टाः' इत्यादिभिश्च लक्ष्मीतौल्येन भूषणाच्छादनाशनादिभिस्तदभीष्टैस्तत्पूजाया विधानेन तदपूजायां तच्छोचने च तद्गेहकुलविनाशस्योद्बोधनेन तत्पुरुषानुष्ठितसकलक्रियावैफल्यबोधनेन च 'यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत्। अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्तते ॥ स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम्। तस्यां त्वरोचमानायां सर्वमेव न रोचते ॥' इत्यादिना स्त्रीणां सन्तानोत्पत्त्याधारत्वेन सृष्टत्वमुपपाद्य तदरोचने प्रजनप्रवाहप्रतिबन्धेन तद्रोचनौपयिकप्रवृत्तेः पुंसां विहितत्वेन च 'सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च। यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥" इत्यनेन दम्पत्योः परस्परानुकूल्येन संतुष्टिपूर्वकप्रवृत्तावेव सकलकल्याणप्राप्तिनिरूपणेन च स्त्र्यपूजाऽरोचनयोः कुलविनाशहेतुत्वनिरूपणेन च स्त्रीणां गृहान्तरवासपरितःपर्यटनादिनिषेधेन च गृहबहिस्संपाद्यसकलकर्मानुष्ठानेष्वस्वातन्त्र्यस्य गृहाभ्यन्तरसंपाद्यगार्हकर्मानुष्ठानेषु पुरुषसंपादितधनवस्तुपरिकरादिरक्षणगार्हकर्मोपयोगिव्ययादौ च स्वातन्त्र्यव्यवस्थापनेन च स्त्रीपूजाया आवापोद्वापाभ्यां कुलवृद्धिकरत्वेन तदावश्यकताबोधन-

क्रियासमभिहारेण च गृहबहिस्संसाध्यलौकिकव्यापारेषु पुरुष-साम्येन स्वातन्त्र्यस्य सर्वत्र निषेधाच्च । अत एव भारद्वाजीयकर्म-मीमांसादर्शने "बीजरक्षणमार्यजातेः" इत्यनेन सूत्रेण सृष्टिबीज-रक्षणस्यार्यजातेरव्याहततामावश्यकतां च प्रतिपाद्य सृष्टिबीज-रक्षणस्य च वर्णाश्रमधर्ममर्यादासेतुसंरक्षणमूलकतां च प्रतिपाद्य तद्रक्षणस्य च स्त्रीरक्षणमूलकत्वात् स्त्रीधर्मनिरूपणावसरे 'नरी-धर्मः पारतन्त्र्यप्रधानः' इति सूत्रेण स्त्रीसृष्टेः प्रकृतिजन्यत्वेन प्रकृतेश्च जडत्वात् परमात्मशक्तिरूपायाः पुरुषसंबन्धेनैव जग-त्कर्तृत्वादिप्रकाशनात् पुरुषसृष्टेः पुरुषसंबन्धित्वाच्च सृष्टिविधौ कौशेयकीटस्येव स्त्रिया एव प्राधान्यं 'सर्गे नार्याः प्राधान्यं कौशेय-कीटवत्' इत्यनेन प्रपञ्च्य 'तच्छुद्धिसंरक्षणं क्षेत्रवत्' इति सूत्रेण क्षेत्रशुद्धिरक्षणमिव साधुसस्यसंपत्तये साधुसन्तानसंपत्तये नारीशुद्धिसंरक्षणमावश्यकमिति प्रतिपाद्य स्वतः पुरुषापेक्षयात्यधिक-कामकलावतीनां स्त्रीणां कामकलोत्तेजककर्मकरणस्य पुरुषकर्तृक-स्य पापाधायकत्वेन 'विफलं कामकलोत्तेजनम्' 'पापाय तत्' इति सूत्राभ्यां प्रतिषेधनद्वारा 'पुण्यातत्प्रसन्नतासर्गशुद्धिहेतुत्वात्' इत्यनेन सर्गशुद्धिहेतुपुण्यकर्मप्रवर्तनस्यावश्यकताप्रतिपादनादिकं च महता सूत्रसन्दर्भेण समुपनिबद्धं संगच्छते । अत एव च खगोलशास्त्रे तृतीयाध्याये स्त्रीजन्मविवेचनप्रकरणे 'पिता रक्षति कौमारे' इत्यादिवचनोत्तरं 'सृष्टिगुप्तमाभिप्रेत्य स्त्रीस्वातन्त्र्यं निराकृतम् । स्त्रीस्वातन्त्र्येण भूलोक आकुलीभवति ध्रुवम् ॥' इति वचनेन विशुद्धसृष्टिसंरक्षणोद्देशेनैव

स्त्रीस्वातन्त्र्यनिराकरणस्य कृतत्वं तत्स्वातन्त्र्येण संकीर्णसन्तानोत्पत्त्यादिभिः सर्वधर्मसमुच्छेदाद्भूलोकस्य विप्लवाक्रान्तिरपि निरूपिता संगता भवति। एवं तत्रैव स्त्रीपुरुषगुणनिरूपणे 'चलानुरागाः पुरुषा दृढप्रेमयुताः स्त्रियः । शौर्यं धैर्यं प्रतापश्च पुरुषाणां गुणाः स्मृताः ॥ लज्जा भयं क्षमा लोके नारीणामुत्तमा गुणाः । परार्थजीवितं कष्टसहिष्णुत्वममन्दता ॥ स्त्रीणामिमे लोकगुप्त्यै भगवन्निर्मिता गुणाः ।' इत्यादिभिः परार्थजीवनकष्टसहिष्णुत्वामन्दत्वदृढप्रेमयुतत्वाद्युत्तमगुणानां च लोकरक्षणनिमित्तेन स्त्रीषु भगवता सृष्टत्वमाम्नाय 'पतिशुश्रूषया नारी देवतातिथिसेवया। शिशुसंरक्षणेनापि ब्रह्मलोकं समश्नुते ॥ आयुषोऽन्ते ब्रह्मलोकं पातिव्रत्यप्रभावतः। प्राप्य ज्ञानकथाः श्रुत्वा तल्लोकविलये सति ॥ ब्रह्मणा सह मुक्ता सा ब्रह्मभूयं गमिष्यति ॥' इत्यादिभिः पतिशुश्रूषणदेवतातिथिसेवनशिशुसंरक्षणादिभिः स्त्रीणां ब्रह्मलोकावाप्तिरन्ते च ब्रह्मणा सह मुक्तिरपि कथिता। मनुना च 'उत्पादनमपत्यस्य जातस्य परिपालनम् । प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥ अपत्यं धर्मकार्याणि शुश्रूषा गतिरुत्तमा । दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥' इत्यादिभिः 'पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया' इत्यादिभिश्च विस्तरेण सर्वधर्मकार्याणां सन्तानोत्पत्तितद्रक्षणात्मपितृस्वर्गादीनां च तदधीनत्वेन च 'पतौ या नाभिचरति मनोवाग्देहसंयुता' इत्यादिभिः पातिव्रत्यरक्षणरूपस्यैकस्यैव धर्मस्य सर्वसंरक्षकतया सर्वैरपि महर्षिभिः वारं वारमुद्घोषिततया स्त्रीस्वातन्त्र्यस्याभिलषितस्यार्यजातिमूलोच्छेदक-

त्वस्य स्फुटत्वादित्यलमधिकेन । इत्थं च सर्वस्मृतिपुराणादि-प्रतिषिद्धस्यार्यजातीयकुलसतीत्वनिरुन्मूलकस्यैहिकामुष्मिकसकल--सुखप्रतिरोधस्यानार्यत्वप्रापकस्य स्त्रीजितसमुन्नीतस्य सार्वत्रिक-स्त्रीस्वातन्त्र्यस्य लिप्सायां सन्तानोत्पत्तिनिरोधककर्मकलापानुतिष्ठासूनां नारीणां तज्जितपुरुषाणां वा तात्पर्यं स्वैरचारादन्यत्र कुत्र वा स्यादिति विभावनीयम् । तत्र स्वातन्त्र्याभ्यानुज्ञापकं शास्त्रमार्यजातीयमन्ततो म्लेच्छजातीयं वा नाद्यावध्युपलभ्यते । अन्यथा निरुक्तरीत्या गृहस्वातन्त्र्यस्य सिद्धत्वात् बाह्यस्वातन्त्र्यापेक्षा किमर्था स्यादित्यातिरोहितमेव प्रेक्षावताम् । अथ द्वितीये स्त्रीणां पुत्रादिपुरुषसाम्येन स्थिरचर-द्रव्येषु दायाधिकारविषयकेंऽशे शास्त्रानुक्तेषु नेत्येव व्यवस्था । 'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति न सुख न परां गतिम् ॥ तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥'' इत्यादिभिर्गीतादिषु कार्याकार्यव्यवस्थितौ शास्त्रस्यैव प्रमाणत्वेन शरणीकरणीयताया व्यवस्थापनात् पुरुषबुद्धेरनुक्षण-विभिन्नत्वात् विलक्षणकल्पकत्वाच्च 'कल्पिका मानुषी बुद्धिस्सा च न व्यवतिष्ठते ।' इति माधवोक्तेरव्यवस्थितत्वाच्च प्रकृते 'भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् । सा यथाकाममश्नीयात् दद्याद्वा स्थावरादृते ॥' इति याज्ञवल्क्येन प्रीतभर्तृदत्तस्थावराति-रिक्तद्रव्ये दानोपभोगाधिकारोक्त्या भर्त्रार्जितेऽपि पुत्राभ्यनुज्ञानर-हिते स्थावरांशे 'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥ स्थावरं द्विविधं चैव यद्यपि

स्वयमार्जितम् । असंभूय सुतान्सर्वान् न दानं न च विक्रयः ॥ ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः । वृत्तिं च तेऽभिकांक्षन्ति न दानं न च विक्रयः ॥" इत्यादिवचनैः पुरुषाणामेव 'एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम् ॥ आपत्काले कुटुंबार्थे धर्मार्थे च विशेषतः ।" इत्युक्तापदादिव्यतिरिक्तकाले दानविक्रयाधिकारस्याभावव्यवस्थापनेन आभोगाधिकारमात्रस्यैव व्यवस्थापनेन च 'यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः । न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ।" इत्यादिना पुत्राणां समविभागे पत्नीनामपि पुत्रसमांशभाजनत्वस्य विहितत्वेन 'पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्' इत्यादिना पित्रनन्तरविभागे मातुरपि समांशभाक्त्वविधानेन च 'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा' इत्यादिना पुत्रसन्ततिराहित्ये पत्न्या एव सर्वांशभाक्त्वाम्नानेन च 'पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥ बन्धुदत्तं तथा शुल्कमन्वादेयकमेव च ।' इत्यादिना 'पारिभाण्डं च गृहेऽलंकारो भार्यायाः' इत्यादिना वस्त्रालंकारादीनां स्त्रीधनत्वेन निरूपणाच्च । निरुक्तातिरिक्तविषये सार्वत्रिकत्वेन दानविक्रयादिसर्वाधिकारो दायाधिकारश्च नास्तीत्येव सिध्यतीत्यन्यत्र विस्तरः ॥

## इति त्रयोदशं स्त्रीस्वातन्त्र्यदायाधिकारव्यवस्थावज्रम्

---

## अथ चतुर्दशं चत्वारिंशत्संस्कारव्यवस्थावज्रम्

१४. अथ शास्त्रविहितेषु चत्वारिंशत्संस्कारेषु त्याजनीयाः के वर्तन्ते ? इति प्रश्नस्य कलिमहिम्ना विलुप्तेषु विलुप्यमानेषु विलोप्स्यमानेषु च सर्वेषु संस्कारेषु विद्वदनुज्ञाव्याजेन विलुप्तप्राय-संस्कारविलोपनाय कुतोऽयं कलिभृत्यानां प्रश्नः कथं वा स्यात्स-माधेयो धर्मानुष्ठानश्रद्धालूनाम् अस्य प्रश्नस्यानुदयात् । तेषां त्याज्यस्य त्याजनीयस्य वा संस्कारमात्रस्यासंभावनीयत्वात् । अश-क्यानुष्ठानाभावः केषांचिदस्तु नाम । अनुष्ठेयत्वे तु श्रद्धैव स्यात् । येषां विलोपनश्रद्धा तेषामेषा शङ्का कः संस्कारो विलोपनीय इति । यथा भूतदयालुत्वमभिनयतां कलिभृत्यानां पशुवधस्थानेषु प्रतिनगरं प्रत्यहमपि शतसहस्रपशुषु हन्यमानेष्वपि न तद्वधप्रति-बन्धप्रवृत्तिः । किं तु यज्ञविघातोद्देशेन जन्तुहिंसानिवारणव्याजेन याज्ञिकात्यल्पपश्वालंभनप्रतिरोधाय सन्नद्धा भवन्ति बहवः संघीभूय शतशः । तस्मान्नास्माकमुपरि शास्त्रीयसंस्कारविलोपनानुमतिजन्य-प्रत्यवायभारो निक्षेप्तव्य इति वदनमेवात्र समुचितं समाधानमिति मत्वात्र विरम्यत इति संक्षेप इति शिवम् ॥

## इति चतुर्दशं चत्वारिंशत्संस्कारव्यवस्थावज्रम्

## उपसंहारपद्यावली

धर्मतन्त्राकरोन्नीतव्यवस्थावज्रनिर्मितः ।
हारोऽयं विबुधाभासदुर्भेद्यः कलिदोषहृत् ॥
दुर्दृष्टिदोषहृत्तत्तद्दृष्टिकृद्धर्मसंशये ।
कलिभृत्यबुधाभासतर्काभासतमोधृते ॥
धर्मतन्त्राकारं भित्त्वा मेधापङ्केन मानतः ।
निर्माय शिल्पनैपुण्या स्थूलहीरकसंग्रहम् ॥
श्रीचन्द्रशेखरेन्द्रेभ्य उपदीकृत्य भक्तितः ।
पुल्यान्वयसुधासिन्धुविधुनान्ध्रेण धीमता ॥
उमामहेश्वरविदा वाणीकारुण्यगामिना ।
क्षीराराम निवसता विद्वद्दलविभूषणम् ॥
धर्मव्यवस्थावज्राढ्यहारो वाग्धनिनार्पितः ।
ईश्वराब्दोर्जशुक्लश्रीतृतीयाभृगुवासरे ॥
श्रीचन्द्रशेखरगुरुप्रमोदायास्तु भूयसे ।
तत्प्रसादितसद्धर्मप्रश्नमालासमाधिकृत् ॥
तत्कृपाप्तविनिर्माणो यावद्भान्विन्दुभाचलम् ।
भारते भातु कण्ठेषु बुधानां भूरि भावितः ॥
निन्दन्तु विद्वदाभासा नन्दन्तु च विपश्चितः ।
उभयं भूषणं मन्ये ग्रन्थस्य परिशीलनात् ॥
इतोऽधिकं तु धर्मालिव्यवस्थावज्रदर्पणे ।
द्रष्टव्यं विबुधैस्सम्यगित्यभ्यर्थ्य विरम्यते ॥

---

PRINTED AT THE MADRAS LAW JOURNAL PRESS, MYLAPORE, MADRAS.